त्वकाग्रं हृदा कृत्वा प्रक्षिपेच्छोभने शुभम् । न्यूनादिदोषमोषाय मूलेनाष्टोत्तरं शतम् ॥ ५३
धाय स्थण्डिलेशाय सर्वकर्मसमर्पणम् । पूजाविसर्जनं चास्य चण्डेशस्य च पूजनम् ॥ ५४
र्माल्यमपनीयाथ शेषमग्नौ यजेच्चरोः । कलशं लोकपालांश्च पूजयित्वा विसृज्य च ॥ ५५
सृजेद्गणमग्निं च रक्षितं यदि वाह्नवः । वाह्नवो लोकपालानां दत्त्वा संक्षेपतो बलिम् ॥ ५६
स्मना शुद्धतोयैर्वा स्नात्वा यागालयं विशेत् । गृहस्थान्दर्भशय्यायां पूर्वशीर्षान्सुरक्षितान् ॥ ५७
दा सद्भस्मशय्यायां यतीन्दक्षिणमस्तकान् । शिखाबद्धशिखानस्त्रसप्तमाणवकान्वितान् ॥ ५८
ज्ञार्थं स्नापयेच्छिष्यांस्ततो यायात्पुनर्बहिः ॥ ५९
' हिलि हिलि शूलपाणये स्वाहा ॥ ६०
धगव्यं चरुं प्राश्य गृहीत्वा दन्तधावनम् । समाचम्य शिवं ध्यात्वा शय्यामास्थाय पावनीम्
क्षान्तर्गतं क्रियाकाण्डं संस्मरन्संविशेद्गुरुः । इति संक्षेपतः प्रोक्तो विधिर्दीक्षाधिवासने ॥ ६२

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायामधिवासनविधिकथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५५५

---

अथ चतुरशीतितमोऽध्यायः ।

---

निर्वाणदीक्षायां निवृत्तिकलाशोधनम् ।

ईश्वर उवाच—

थ प्रातः समुत्थाय कृतस्नानादिको गुरुः । दध्यार्द्रमांससमद्यादेः प्रशस्ताऽभ्यवहारिता ॥ १
जाश्वारोहणं स्वप्ने शुभं शुक्लांशुकादिकम् । तैलाभ्यङ्गादिकं हीनं होमोऽघोरेण शान्तये ॥ २
नित्यकर्मद्वयं कृत्वा प्रविश्य मखमण्डपम् । स्वाचान्तो नित्यवत्कर्म कुर्यान्नैमित्तिके विधौ ॥ ३
तः संशोध्य चाऽऽत्मानं शिवहस्तं तथाऽऽत्मनि । विन्यस्य कुम्भगं प्रार्च्य इन्द्रादीनामनुक्रमात्
ण्डले स्थण्डिले वाऽपि प्रकुर्वीत शिवार्चनम् । तर्पणं पूजनं वह्नेः पूर्णान्तं मन्त्रतर्पणम् ॥ ५
दुःस्वप्नदोषमोषाय शस्त्रेणाष्टाधिकं शतम् । हुत्वा हूंसंपुटेनैव विदध्यान्मन्त्रदीपनम् ॥ ६
भन्तर्बलिविधाने च मध्ये स्थण्डिलकुम्भयोः । कृत्वा शिष्यमनेनाथ लब्धानुज्ञो प्रवेशयेत् ॥ ७
कुर्यात्समयवत्तत्र मण्डलारोपणादिकम् । संपातहोमं तन्नाडीरूपदर्भकरानुगम् ॥ ८
संनिधानाय तिस्रो हुत्वा मूलाणुनाऽऽहुतीः । कुम्भस्थं शिवमभ्यर्च्य पाशसूत्रमुपाहरेत् ॥ ९
दक्षिणोर्ध्वकायस्य शिष्यस्याभ्यर्चितस्य च । तच्छिखायां निबध्नीयात्पादाङ्गुष्ठावलम्बितम् ॥ १०
तं निवेश्य निवृत्तिस्तु व्याप्तिमालोक्य चेतसा । ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकं ततः ॥ ११
कपालोऽजश्च बुद्धश्च वज्रदेहः प्रमर्दनः । विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ॥ १२
अग्नी रुद्रो हुताशी च पिङ्गलः खादको हरः । ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षपान्तकौ ॥ १३

---

१ क. ट. च. 'श्लोभार । २ क. ड. च. 'ञ्चवन' । छ. 'जेड्डन' । ३ क. ट. च. 'च धारयं' । च. 'च स्पार' । ४ घ. 'नि दिग्' । ५ ग. 'ग्रदान । ६ घ. 'यजार्के' । ७ क. ट. च. स्वचान्त । ८ ग. शिवं हुन त' । ९ क. ड. घ. 'त्वा हुं' । ग. 'त्वा हुम्' । १० क ट. च 'दक्ष तम । ११ ग. 'होनेकम' । १२ घ. 'प्रणुरा' । १३ क. ख. ट. च. अग्निरुद्रौ हु' । १४ ग. 'नौ प्रापी भस्मा' ।

याम्यमृत्युहरो धाता विधाता कार्यरक्षकः । कालो धर्मोऽप्यधर्मश्च संयोक्ता च वियोजकः १४
नैर्ऋतो मारणो हन्ता क्रूरदृष्टिर्भयानकः । ऊर्ध्वांशको विरूपाक्षो धूम्रलोहितदंष्ट्रवान् ॥ १५
बलश्चातिबलश्चैव पाशहस्ती महाबलः । श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः ॥ १६
वडवास्यश्च भीमश्च दशैते वारुणाः स्मृताः । दीर्घो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षमान्तकः॥१७
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः । जटामुकुटधारी च नानारत्नधरस्तथा ॥ १८
निधीशो रूपवान्धन्यः सौम्यदेहः प्रसादकृत् । प्रकाशोऽप्यथ लक्ष्मीवान्कामरूपो दशोत्तरे॥१९
विद्याधरो ज्ञानधरः सर्वज्ञो वेदपारगः । मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः ॥ २०
सर्वविद्याविधाता च सुखदुःखहरो दश । अनन्तः पालको धीरः पातालाधिपतिस्तथा ॥ २१
वृषो वृषधरो वीर्यो ग्रसनः सर्वतोमुखः । लोहितश्चैव विज्ञेया दश रुद्राः फणिस्थिताः ॥ २२
शंभुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः । संवाहश्च विवाहश्च लाभो लिप्सुर्विचक्षणः ॥ २३
अत्ता कुहककालाग्निरुद्रो हाटक एव च । कूष्माण्डश्चैव सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ २४
रुद्रश्चाष्टाविमे रुद्राः कटाहाभ्यन्तरे स्थिताः । एतेषामेव नामानि भुवनानामपि स्मरेत् ॥ २५
भवोद्भवः सर्वभूतः सर्वभूतसुखप्रदः । सर्वसांनिध्यकृद्ब्रह्मविष्णुरुद्रशरार्चितः ॥ २६
संस्तुत पूर्वस्थित, ॐ साक्षिन्, ॐ रुद्रान्तक, ॐ पतङ्ग, ॐ शब्द, ॐ सूक्ष्म, ॐ शिव सर्व
सर्वद सर्वसांनिध्यकर ब्रह्मविष्णुरुद्रकर, ॐ नमः शिवाय, ॐ नमो नमः ॥ २७
अष्टाविंशतिपदानि व्योमव्यापिमनोगुह । सद्योहृदस्त्रनेत्राणि मन्त्रवर्णाष्टको मतः ॥ २८
बीजकारो मकारश्च नाड्याविडापिङ्गलाह्वये । प्राणापानावुभौ वायू घ्राणोपस्थौ तथेन्द्रिये २९
गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चके । पार्थिवं मण्डलं पीतं वज्राङ्कं चतुरस्रकम् ॥ ३०
विस्तारो योजनानां तु कोटिरस्य शताहता । अत्रैवान्तर्गता ज्ञेया योनयोऽपि चतुर्दश ॥ ३१
प्रथमं सोमदेवानामष्टाद्या देवयोनयः । मृगः पक्षी च पन्नगश्चतुर्थी तु सरीसृपाः ॥ ३२
स्थावरं पञ्चमं सर्वं योनिः षष्ठी अमानुषी । पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च ॥ ३३
सौम्यं प्राजेश्वरं ब्राह्ममष्टमं परिकीर्तितम् । अष्टानां पार्थिवं तत्त्वमधिकारास्पदं मतम् ॥ ३४
लयस्तु प्रकृतौ बुद्धौ भोगो ब्रह्मा च कारणम् । ततो जाग्रदवस्थानैः समस्तैर्भुवनादिभिः ॥ ३५
निवृत्तिं गर्भितां ध्यात्वा स्वमन्त्रेण नियोज्य च ॥ ३६

ॐ हां हूं हां निवृत्तिकलापाशाय हूं फट्, तत ॐ हां हां निवृत्तिकलापाशाय स्वाहेत्यने-नाङ्कुशमुद्रया पूरकेणाऽऽकृष्य, ॐ हूं हां हूं निवृत्तिकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेनाधःस्थानादादाय, ॐ ॐ हां हां निवृत्तिकलापाशाय नम इत्यनेनोद्

१ क. ख. ङ. च. याम्यो मृ । २ क. च °र्यचक्रः । ३ क. ङ च. °का विविधोत्तकः । ४ क. ङ. च °हस्तो म° । ५ ग. °श्च भीम° । ६ घ दीर्घो । ७ क. ङ. च. क्षमान्तक. । घ. क्षयान्तकः । ८ घ. °वान्धन्यः सौ° । ९ घ. °न्धन्योऽर्घ° । १० क. ङ. च. वीरः । ११ क च. °रो भार्यो प्रसनः । १२ घ. संहारश्च विहारश्च । १३ ख. °श्च नमोऽस्ति° । १४ क. ङ. च. °तः । अर्चित, अथ° । १५ क. घ ङ. च °न्, गुह २ पतङ्ग २ ज्ञान २ शब्द २ सूक्ष्म २ शिव २ पर्वदण्ड २ सर्वदा° । १६ क. ङ. च. °द्रपर, । १७ क. ङ. च. °मः, ॐ शिवाय, ॐ नमो नमः । अ° १८ क. घ. ङ, च °विंशत्° । १९ क. ङ. च. °हन्ते ने° । २० घ. °मा सर्वदे° । २१ घ. °यानां मन्त्राद्या । २२ ख. घ. मृगश्च° । २३ घ. प्राजेश° । २४ ख. हं । २५ घ. हूं । च. हु । २६ ख. हां नि° । च. हा हू हां । २७ घ. ॰हूं हूं नि° । २८ ख. हु । २९ च. कुम्भेन नाड्यवस्था° । ३० ख. ॐ हूं हां नि° । च. ॐ हां हूं नि° ।

( निवृत्तिकलाशोधनम् )

वमुद्रया रेचकेन कुम्भे संस्थाप्य, ॐ हां निवृत्तिकलापाशाय नम इत्यनेनार्घ्यं दत्त्वा संपूज्य त्रिमुखेनैव स्वाहान्तेनैव संनिधानायाऽऽहुतित्रयं संतर्पणाहुतित्रयं च दत्त्वा, ॐ हां ब्रह्मणे नम इति ब्रह्माणमावाह्य संपूज्य च स्वाहान्तेन संतर्प्य ॥ ३७

ब्रह्मंस्तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन विधिं विज्ञापयेदिति ॥ ३८

आवाहयेत्ततो देवीं रक्तां वागीश्वरीं हृदा । इच्छाज्ञानक्रियारूपां षड्विधां हेतुकारणम् ॥ ३९

पूजयेत्तर्पयेद्देवीं प्रकारेणामुना ततः । वागीश्वरीं त्रिनिःशेषयोनिविक्षोभकारणम् ॥ ४०

हृत्संपुटार्थबीजादिहूंफडन्तशराणुना । ताडयेद्धृदये तस्य प्रविशेत्स विधानवित् ॥ ४१

ततः शिष्यस्य चैतन्यं हृदि वह्निकणोपमम् । निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद्यथा ॥ ४२

ॐ हां हूं हः, हूं फट् ॥ ४३

ॐ हां स्वाहेत्यनेनाथ पूरकेणाङ्कुशमुद्रया । तदाकृष्य स्वमन्त्रेण गृहीत्वाऽऽत्मनि योजयेत् ॥ ४४

ॐ हां हूं हामात्मने नमः ॥ ४५

पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेन तत् । ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवास्पदम् ॥ ४६

गर्भाधानार्थमादाय युगपत्सर्वयोनिषु । क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया ॥ ४७

ॐ हां हें हामात्मने नमः ॥ ४८

पूजयेदप्यनेनैव तर्पयेदपि पञ्चधा । अन्ययोनिषु सर्वासु देहशुद्धिं हृदाऽऽचरेत् ॥ ४९

नात्र पुंसवनं स्त्र्यादिशरीरस्यापि संभवात् । सीमन्तोन्नयनं वाऽपि दैवान्यङ्गानि देहवत् ॥ ५०

शिरसा जन्म कुर्वीत युगपत्सर्वदेहिनाम् । तथैव भावयेदेषामधिकारं शिवाणुना ॥ ५१

भोगं कवचमन्त्रेण शस्त्रेण विषयात्मना । मोहरूपमभेदं च लयसंज्ञं विभावयेत् ॥ ५२

शिवेन श्रोतसां शुद्धिं हृदा तत्त्वविशोधनम् । पञ्च पञ्चाऽऽहुतीर्दद्याद्गर्भाधानादिषु क्रमात् ॥ ५३

मायया मलकर्मादिपाशबन्धनिवृत्तये । निष्कृत्यैव हृदा पश्चाद्यजेत शतमाहुतीः ॥ ५४

मलशक्तिनिरोधेन पाशानां च वियोजनम् । स्वाहान्तायुधमन्त्रेण पञ्च पञ्चाऽऽहुतीर्यजेत् ॥ ५५

मायावन्तस्य पाशस्य सप्तवाराभिजप्तया । कर्तर्या छेदनं कुर्यात्कल्पशस्त्रेण वद्यथा ॥ ५६

ॐ हूं निवृत्तिकलापाशाय हूं फट् ॥ ५७

बन्धकत्वं च निर्वर्त्य हस्ताभ्यां च शराणुना । विसृज्य वर्तुलीकृत्य घृतपूर्णे स्रुवे धरेत् ॥ ५८

दहेदस्त्रकलास्त्रेण केवलास्त्रेण भस्मसात् । कुर्यात्पश्चाऽऽहुतीर्दत्त्वा पाशाङ्कुशनिवृत्तये ॥ ५९

ॐ हः, अस्त्राय हूं फट् ॥ ६०

प्रायश्चित्तं ततः कुर्यादस्त्राहुतिभिरष्टभिः । अथाऽऽवाह्य विधातारं पूजयेत्तर्पयेत्तथा ॥ ६१

ततः–ॐ हां शब्दस्पर्शशुद्धब्रह्मन्गृहाण स्वाहेत्याहुतित्रयेणाधिकारमस्य समर्पयेत् ॥ ६२

दग्धनिःशेषपापस्य ब्रह्मन्नस्य पशोस्त्वया । वन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति ॥ ६३

---

१ च. कुण्डे संस्थाप्य, ॐ हूं नि° । २ क. ड. च. °हुतिपर्यंकस्य स्मात् । पू° । ३ क. ड. च. °ध्वरे न निः° । ४ क. ड. च °शेष वि° । ५ ख. °हां हूं हां हः, हूं फ° । ६ क. ड. च. हूं हां हः, । ७ क. ड. च. °कृष्याऽऽत्मन° । ८ क. ड. च. हूं । ९ क. ड. च. हूं । १० क. ड. च. शिखाग्निना । ११ क. ड. च. नमः स्वा° । १२ क. ख. च. नियो-जनम् । १३ क. ड. च. °न्तत्सपा° । १४ क. ड. च. चरेत् । १५ क. ड. च. पाशांश्चहुति° । १६ क. ड. च. हूं । १७ क. ड. च. हुं । १८ क. ग. ड. च. °शुद्ध° ।

ततो विसृज्य धातारं नाड्या दक्षिणया शनैः । संहारमुद्रयाऽऽत्मानं कुम्भकेन निजाणुना ॥६४
राहुयुक्तैकदेशेन चन्द्रबिम्बेन संनिभम् । आदाय योजयेत्सूत्रे रेचकेनोद्भवाख्यया ॥ ६५
पूजयित्वाऽर्घ्यपात्रस्थतोयबिन्दुसुधोपमम् । आप्यायनाय शिष्यस्य गुरुः शिरसि विन्यसेत् ६६
विसृज्य पितरौ दद्याद्द्वौणडन्तंशिवाणुना । पूरणाय विधिः पूर्णा निवृत्तिरिति शोधिता ॥ ६७

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां निवृत्तिकलाशोधनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६२२

---

अथ पञ्चाशीतितमोऽध्यायः ।

---

प्रतिष्ठाकलासंशोधनविधिः ।

ईश्वर उवाच—

तत्त्वयोरथ संधानं कुर्याच्छुद्धविशुद्धयोः । ह्रस्वदीर्घप्रयोगेण नादनादान्तसंज्ञिना ॥ १
ॐ ह्रां ह्रूं हाम् ॥ २
अप्तेजो वायुराकाशं तन्मात्रेन्द्रियबुद्धयः । गुणत्रयमहंकारश्चतुर्विंशः पुमानिति ॥ ३
प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् । पञ्चविंशतिसंख्यानि खादियान्ताक्षराणि च ॥४
पञ्चाशदधिका षष्ठिर्भुवनैस्तुल्यसंज्ञिताः । तावन्त एव रुद्राश्च विज्ञेयास्तत्र तद्यथा ॥ ५
अमरेशः प्रभावश्च नैमिषः पुष्करोऽपि च । तथा पादिश्च दण्डिश्च भावभूतिरथाष्टमः ॥ ६
नकुलीशो हरिश्चन्द्रः श्रीशैलो दशमः स्मृतः । अन्वीशोऽम्रातिकेशश्च महाकालोऽथ मध्यमः ॥७
केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् । ततो गयाकुरुक्षेत्रखलानादिकनादिके ॥ ८
विमलश्चाट्टहासश्च माहेन्द्रो भीम एव च । वस्त्रापदं रुद्रकोटिरवियुक्तो महाबलः ॥ ९
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च । अजेशश्चैव सर्वज्ञो भास्वरः सूदनान्तरः ॥ १०
सुबाहुर्बहुरूपी च विशालो जटिलस्तथा । रौद्रोऽथ पिङ्गलाक्षश्च कालदंष्ट्री भवेत्ततः ॥ ११
विधुरश्चैव घोरश्च प्राजापत्यो हुताशनः । कामरूपी तथा कालः कर्णोऽप्यथ भयानकः ॥ १२
मतङ्गः पिङ्गलश्चैव हरो वैधातृसंज्ञकः । शङ्कुकर्णो विधानश्च श्रीकण्ठश्चन्द्रशूलिना ॥
सर्वेतेन च पर्यन्ताः कथ्यन्तेऽथ पदान्यपि ॥ १३
व्यापिन्, ओमरूप, ॐ प्रमथ, ॐ तेजः, ॐ ज्योतिः, ॐ पुरुष, ओमग्ने, ॐ धूम, ओम-
भस्म [न], ॐ अनादि, ॐ नाना, ॐ धूधू, ॐ भूः, ॐ भुवः, ॐ स्वः, अनिधन विधनोद्भव

---

१ घ. °ज्ञानना । २ ख. °न्वयाप्नु । ३ क. ड. च. भावनाय । ४ क. ड. च. तत्त्वयो° । ५ ख. ग. °न्तसं-
ज्ञिना । ६ क. ख. ग. ड. च. °षनास्तुल्य° । ७ क. ड. च. °ष: शुभ्रनोऽपि । ८ क. ड. च. तथाऽऽतलिश्च । ९ क. ड.
च. °न. । प्रलम्बोऽम्बाति° । १० घ. °धोऽम्राति° । ११ ख. ग. गया कुरुक्षेत्रे खलेना° । १२ क. ड. च. °धाम
देशश्च मा° । घ. °भारत° । १३ क. ख. ग. ड. च. प्रयाग° । १४ घ. घ । भोत्र° । १५ क. ड. च °रः । स्वराद्युमं-
सह° । १६ घ. °र्दुसंसह° । १७ ख. विदुर° । १८ क. ड. च. °कः । पतद्धेश्च बहवः धी° । १९ ग. °न्द्रोपरः । प° ।
२० क. ड. च. °र्., २ अरूप २ प्रथम तेज (ॐ) ज्योतिः, २ पुरुष(ष?)। २ अनय २ अधूम २ अभास २ अनादि २
२ धूम २ ॐ भू. ।

शिव शर्व परमात्मन्महेश्वर महादेव सद्भावेश्वर महातेजः, योगाधिपते मुञ्च प्रथम सर्व सर्वेति द्वात्रिंशत्पदानि ॥ १४

वी(बी)जभावे त्रयो मन्त्रा वामदेवः शिवः शिखा । गान्धारी च सुषुम्ना च नाड्यौ द्वौ मारुतौ तथा ॥
समानोदाननामानौ रसना पायुरिन्द्रिये । रसस्तु विषयो रूपशब्दस्पर्शरसा गुणाः ॥ १६
मण्डलं वर्तुलं तच्च पुण्डरीकाङ्कितं सितम् । स्वभावस्या प्रतिष्ठायां कारणं गरुडध्वजम् ॥ १७
प्रतिष्ठान्तर्गतं सर्वं संचिन्त्य भुवनादिकम् । सूत्रं देहेऽथ मन्त्रेण प्रविश्यैनां नियोजयेत् ॥ १८

ॐ हां ख्रीं हां प्रतिष्ठाकलापाशाय, ॐ फट् । स्वाहान्तेनानेनैव पूरकेणाङ्कुशमुद्रया समाकर्षेत् । ततः, ॐ हां हूं ह्रां हूं प्रतिष्ठाकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेन हृदयादधो नाभिसूत्रादादाय, ॐ हां हूं हौं हां प्रतिष्ठाकलापाशाय नम इत्यनेनोद्भवमुद्रया रेचकेन कुम्भे समारोपयेत् । ॐ हां हूं प्रतिष्ठाकलापाशाय नम इत्यनेनार्चयित्वा संपूज्य स्वाहान्तेनाऽऽहुतीनां त्रयेण संनिधाय ततः—ॐ हां विष्णवे नम इति विष्णुमावाह्य संपूज्य संतर्प्य ॥ १९

विष्णो तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन विष्णुं विज्ञापयेदिति ॥
ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् । आवाह्याभ्यर्च्य संतर्प्य शिष्यं वक्षसि ताडयेत् ॥ २१
ॐ हां हां हं फट् ॥ २२
प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः । शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ २३
ॐ हां हं हां हूं फट् ॥ २४
स्वाहान्तेन हृदाऽऽकृष्य तेनैव पुटितात्मना । गृहीत्वा तं नमोन्तेन निजात्मनि नियोजयेत् ॥ २५
ॐ हां हं हांमात्मने नमः ॥ २६
पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । वामया तदनेनैव देवीगर्भे विनिक्षिपेत् ॥ २७
ॐ हां हं हामात्मने नमः ॥ २८
देहोत्पत्तौ हृदा होमं शिरसा जन्मना तथा । शिखया वाऽधिकाराय भोगाय कवचाणुना ॥ २९
तत्त्वशुद्धौ हृदा होमं गर्भाधानाय पूर्ववत् । शिरसा पाशशैथिल्ये निष्कृत्यैवं शतं जपेत् ॥ ३०
एवं पाशवियोगेऽपि ततः शस्त्रात्मजप्तया । छिन्द्यादस्त्रेण कर्तर्या कला बीजवता यथा ॥ ३१
ॐ ह्रीं प्रतिष्ठाकलापाशाय हः फट् ॥ ३२
विसृज्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत् । घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ ३३

---

१ ख. ग. घ. योगाधिपतये । २ ख. °श्व ॐ प्र° । ३ ख. °मन, ॐ स° । ४ ख. शजा । ५ क. ख. ग. ङ. घ. शितम् । ६ घ. देहे स्वम° । ७ क. ङ. च. खों । ८ क. ङ. च. हुं । ९ क. ङ. च. हां हूं श्रीं हां हूं प्र° । ख. हां हुं हूं प्र° । १० क. ङ. च. हुं । ११ घ. नाडीम° । १२ क. ङ. घ. हूं । १३ क. ख. ग. घ. ङ. च. हीं प्र° । १४ क. ख. ग. ङ. च. ह्रीं । १५ क. ख. ग. ङ. च. °नार्थयि° । १६ क. ङ. च. हां हं हां हः फ° । १७ क. ङ. च. हं हां हं फ° । १८ घ. हां । १९ ख. °दीक्षाऽन्तर्गतो° । २० क. ङ. च. हं हाम° । २१ क. ङ. °नयद्वतंसं° । २२ घ. देवीग° । २३ क. ख. ग. ङ. च. जन्मने । २४ क. ङ. च. °षा । जवनु° । ख. ग. °षा । जन्तु° । २५ क. ङ. घ. यजेद् । २६ क. ङ. च. ह्रीं । २७ ङ. च. हः । वि° । २८ क. घ. ङ. च. स्रुवे ।

अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधार्थं दद्यादष्टाऽऽहुतीस्ततः ॥ ३४
ॐ हः, अस्त्राय हूं फट् ॥ ३५
हृदाऽऽवाह्य हृषीकेशं कृत्वा पूजनतर्पणे । पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ ३६
ॐ हां रसशुल्कं गृहाण स्वाहा ॥ ३७
निःशेषदग्धपाशस्य पशोरस्य हरे त्वया । न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ ३८
ततो विसृज्य गोविन्दं विद्यात्मानं नियोज्य च । राहुमुक्तार्धदृश्येन चन्द्रबिम्बेन संनिभम् ३९
संहारमुद्रया स्वस्थं विधायोद्भवमुद्रया । सूत्रे संयोज्य विन्यस्य तोयबिन्दुं यथा पुरा ॥ ४०
विसृज्य पितरौ सद्रैः पूजितौ कुसुमादिभिः । दद्यात्पूर्णां विधानेन प्रतिष्ठाऽपि विशोधिता॥ ४१

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां प्रतिष्ठाकलासंशोधनविधिर्नाम पञ्चाशीतितमोऽध्यायः ॥८५॥

आदितः श्लोकानां समष्ट्यङ्काः—२६६१

---

अथ षडशीतितमोऽध्यायः ।

---

विद्यासंशोधनविधिः ।

ईश्वर उवाच—

संधानमथ विद्यायाः प्राचीनकलया सह । कुर्वीत पूर्ववत्कृत्वा तत्त्वं वर्णय तद्यथा ॥ १
ॐ हौं क्षीमिति संधानम् ॥ २
रागश्च शुद्धविद्या च नियतिः कलया सह । कालो माया तथाऽविद्या तत्त्वानामिति सप्तकम् ३
रलवाः शषसा वर्णाः पद्विद्यायां प्रकीर्तिताः । पदानि प्रणवादीनि एकविंशतिसंख्यया ॥ ४
ॐ नमः शिवाय सर्वप्रभवे शिवायेशानमूर्धाय तत्पुरुषवक्त्रायाघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तये ॐ नमो नमो गुह्यातिगुह्याय गोप्त्रेऽनिधनाय सर्वाधिपाय ज्योतीरूपाय परमेश्वराय भावेन, ॐ व्योम ॥ ५
ॐ रुद्राणां भुवनानां च स्वरूपमथ कथ्यते । प्रथमो वामदेवः स्यात्ततः सर्वभवोद्भवः ॥ ६
यमदेहः प्रभुर्धाता क्रमविक्रमसुप्रभाः । वटुः प्रशान्तनामा च परमाक्षरसंज्ञकः ॥ ७
शिवश्च सशिवो बभ्रुरक्षयः शंभुरेव च । अदृष्टरूपनामानौ तथाऽन्यो रूपवर्धनः ॥ ८
मनोन्मनो महावीर्यश्चित्राङ्गस्तदनन्तरम् । कल्याण इति विज्ञेयाः पञ्चविंशतिसंख्यया ॥ ९
पिङ्गला गान्धारी पीने नाड्यौ द्वे तत्र ते यथा । पूषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ १०
विषयौ रूपगन्धाविन्द्रिये पादचक्षुषी । शब्दः स्पर्शश्च रूपं च त्रय एते गुणाः स्मृताः ॥ ११
अवस्थाऽत्र सुषुप्तिश्च रुद्रो देवस्तु कारणम् । विद्यामध्यगतं सर्वं भावयेद्भुवनादिकम् ॥ १२

---

१ ख. ग. घ. °ह्युति° । २ क. ङ. च. °त । अ° । ३ क. ङ. च. °य फ° । ४ घ. हूं । ५ ख. ग. घ. च. [illegible] । ६ ख. ग. °तस्तु त° । ७ क. ख. घ. [illegible] । ८ ङ. च. ॐ हां हीं हूं हां [illegible] । [illegible] । ९ ख. ग. °मू । प्रे° । १० क. ख. ङ. च. °कथ्यत° । ११ घ. °वे ह शि° । १२ क. ङ. च. [illegible] । १३ ख. ङ. च. °र्याश्चित्राङ्ग° । [illegible] । १४ घ. [illegible] । १५ क. ङ. च. [illegible] । १६ ख. ग. घ. ङ. च. [illegible] । १७ ख. घ. [illegible] ।

ताडनं छेदनं तत्र प्रवेशं चापि योजनम् । आकृष्य ग्रहणं कुर्याद्विद्यया हृत्प्रदेशतः ॥ १३
आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् । वामया योजयेद्योनौ गृहीत्वा द्वादशान्ततः ॥ १४
कुर्वीत देहसंपत्तिं जन्माधिकारमेव च । भोगं लयं तथा स्रोतःशुद्धिस्तत्त्वविशोधनम् ॥ १५
निःशेषमलकर्मादिपाशबन्धनिवृत्तये । निष्कलत्वं विधानेन यजेत शतमाहुतीः ॥ १६
अस्त्रेण पाशशैथिल्यं मलशक्तितिरोहतिम् । छेदनं मर्दनं तेषां वर्तुलीकरणं तथा ॥ १७
दाहं तदक्षराभावं प्रायश्चित्तमथोदितम् । रुद्राण्यावाहनं पूजा रूपगन्धसमर्पणम् ॥ १८
ॐ ह्रीं रूपगन्धौ शुल्कं रुद्र गृहाण स्वाहा ॥ १९
संश्राव्य शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् । विद्यायाऽऽत्मनि चैतन्यं पाशसूत्रे निवेशयेत् २०
बिन्दुं शिरसि विन्यस्य विसृजेत्पितरौ ततः । दद्यात्पूर्णां विधानेन समस्तविधिपूरणीम् ॥ २१
पूर्वोक्तविधिना कार्यं विद्यायां ताडनादिकम् । स्ववीजं तु विशेषः स्यादिति विद्या विशोधिता

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां विद्याशोधनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६८५

---

अथ सप्ताशीतितमोऽध्यायः ।

---

शान्तिशोधनम् ।

ईश्वर उवाच—

वक्ष्याम्यधुना विद्यां शान्त्या सार्धं यथाविधि । शान्तौ तन्तुद्वयं लीनं भावेश्वरसदाशिवौ ॥ १
कारश्च क्षकारश्च द्वौ वर्णौ परिकीर्तितौ । रुद्राः समानानामानो भुवनैः सह तद्यथा ॥ २
भवः समयः क्षुद्रो विमलः शिव इत्यपि । घनौ निरञ्जनाकारौ स्वशुरौ दीप्तकारणौ ॥ ३
वेदशेश्वरनामा च त्रिदशः कालसंज्ञकः । सूक्ष्माम्बुजेश्वरश्चेति रुद्राः शान्तौ प्रतिष्ठिताः ॥ ४
व्योमव्यापिने व्योमव्याप्यरूपाय सर्वव्यापिने शिवायानन्ताय नाथायानाश्रिताय ध्रुवाय
शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहारायेति द्वादश पदानि ॥ ५
रूपः कैवयो मन्त्रौ बीजे बिन्दूपकारकौ । अलम्बुषायसानाख्यौ वायू कृकरकूर्मकौ ॥ ६
इन्द्रिये त्वकरावस्याः स्पर्शस्तु विषयो मतः । गुणौ स्पर्शनिनादौ द्वावेकः कारणमीश्वरः ॥ ७
र्यावस्थितिः शान्तिरित्थं संभाव्य भुवनादिकम् । विदध्यात्ताडनं भेदं प्रवेशं च वियोजनम् ॥ ८
आकृष्य ग्रहणं कुर्याच्छान्तेर्वेष्टनसूत्रतः । आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् ॥ ९
ॐ तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन कुर्याद्विज्ञापनामिति ॥ १०
आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकम् । विद्यायाऽऽदाय चैतन्यं विधिनाऽऽत्मनि योजयेत्

---

१ क ङ. च 'द्विसप्तदलेश' । २ क ङ च कटाग्नुं' । ख ग कम्बकं' । ३ ध 'रोहिवान्' । ४ क. ङ. च 'दहनाख्ये' । ५ क ङ. च ह्रां । ६ क ख ग ङ च विद्य । ७ क ङ. च तत्स्वर्ग नेङ आ' । ८ ख, ग. घर्ष । ९ ख. ग धर्मो । १० क ङ च 'ठा । ज्या' । ११ क. 'वाचालभा' । ङ 'वाचालाभे' । च 'वाच रनाभा' । १२ क ङ च सूक्ष्म । १३ ध ससनो । १४ क ङ च 'नै चान्न_नि' । १५ ख. ध. 'शान्त्यंशे ध' । १६ ख. ङ ध. विद्याविच्छेद् । १७ ङ. ङ च प्राप्य । १८ ङ ङ च ह्रां ।

पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । हृत्संपुटात्मबीजेन देवीगर्भे नियोजयेत् ॥ १२
देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे । शिखया वाऽधिकाराय भोगाय कवचाणुना ॥ १३
लयाय शस्त्रमन्त्रेण स्रोतःशुद्धौ शिवेन च । तत्त्वशुद्धौ हृदा होवं गर्भाधानादि पूर्ववत् ॥ १४
वर्मणा पाशशैथिल्यं निष्कृत्यैवं शतं यजेत् । मलशक्तितिरोधाने शस्त्रेणाऽऽहुतिपञ्चकम् ॥ १५
एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया । छिन्द्यादस्त्रेण कर्तर्या पाशान्बीजवता यथा ॥ १६
ॐ हौं शान्तिकलापाशाय हः, हूं फट् ॥ १७
विसृज्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत् । घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ १८
अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधाय दद्यादष्टाऽऽहुतीरथ ॥ १९
ॐ हः, अस्त्राय हूं फट् ॥ २०
रुद्रेश्वरं समावाह्य कृत्वा पूजनतर्पणे । विदधीत विधानेन तस्मै शुल्कसमर्पणम् ॥ २१
ॐ हामीश्वर बुद्ध्यहंकारौ शुल्कं गृहाण स्वाहा ॥ २२
निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया । न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ २३
विसृजेदीश्वरं देवं रौद्रात्मानं नियोजयेत् । ईशचन्द्रमिवाऽऽत्मानं विधिनाऽऽत्मनि योजयेत् २४
सूत्रे संयोजयेदेनं शुद्धयोद्भवमुद्रया । दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दुकम् ॥ २५
विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः । दद्यात्पूर्णां विधानज्ञो निःशेषविधिपूरणीम् ॥ २६
अस्यामपि विधातव्यं पूर्ववत्ताडनादिकम् । स्वबीजं तु विशेषः स्याच्छुद्धिः शान्तेरपीडिता २७

इत्याग्नेये महापुराणे निर्वाणदीक्षायां शान्तिशोधनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७१२

---

अथाष्टाशीतितमोऽध्यायः ।

---

निर्वाणदीक्षाशेषविधिः ।

ईश्वर उवाच—

संधानं शान्त्यतीतायाः शान्त्या सार्धं विशुद्धया । कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ १
ॐ हां क्षौं हौं हामिति संधानानि ॥ २
उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकसिद्धिकम् । दीपकं रोचिकं चैव मोचकं चोर्ध्वगामि च ॥ ३
व्योमरूपमनाथं च स्यादनाश्रितमष्टकम् । ओंकारपदमीशानेन्मन्त्रौ वर्णाश्च षोडश ॥ ४
अकारादिविसर्गान्ता बीजेन देहकारकौ । कुहूश्च शङ्खिनी नाड्यौ देवदत्तधनंजयौ ॥ ५
+मारुतौ स्पर्शनं श्रोत्रमिन्द्रिये विषयो नभः । शब्दो गुणोऽस्यावस्था तु तुर्यातीता तु पञ्चमी ॥

---

+ इदमुत्तरार्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ख. घ. 'था चापि' । २ घ. जपेत् । ३ क. ख. च हूं । ४ क. ख. घ. हाः । ५ ख. 'मध्येष । ६ घ. १९ । ७ ग. ख. घ. 'नपिण्डक' । ८ क. घ. 'वर्णोदित य' । ९ क. ख. घ. हां । ख. हूं । १० क. ख. घ. 'कमि' । ११ क. घ. थंचक । १२ क. ङ. घ. 'ग्रान ने' । १३ क. ख. ङ. घ. नाड्यौ ।

( निर्वाणदीक्षाविधिः )

ु: सदाशिवो देव इति तत्त्वादिसंचयम् । संचिन्त्य शान्त्यतीताख्यं विदध्यात्ताडनादिकम् ॥
लापाशं समाताड्य फडन्तेन विभिद्य च । प्रविश्यान्तर्नमोन्तेन फडन्तेन वियोजयेत् ॥ ८
खाहृत्संपुटीभूतं स्वाहान्तं स्रोणिमुद्रया । पूरकेण समाकृष्य पाशं मस्तकसूत्रतः ॥ ९
म्भकेन समादाय रेचकेनोद्भवाख्यया । हृत्संपुटनमोन्तेन वह्निं कुण्डे निवेशयेत् ॥ १०
स्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत् । सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ ११
दाऽऽख्यातेऽधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति
ोरावाहनं पूजां कृत्वा तर्पणसंनिधी । हृत्संपुटात्मबीजेन शिष्यं वक्षसि ताडयेत् ॥ १३
ॐ हां हूं हं फट् ॥ १४
विश्य चाप्यनेनैव चैतन्यं विभजेत्ततः । शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ १५
ॐ हां हः, हूं फट् ॥ १६
ाहान्तेन तदाकृष्य तेनैव पुटितात्मना । गृहीत्वा तं नमोन्तेन निजात्मनि नियोजयेत् ॥ १७
ॐ हां हं हांमात्मने नमः ॥ १८
र्वादिपितृसंयोगं भावयित्वोद्भवाख्यया । वामया तदनेनैव देव्या गर्भे नियोजयेत् ॥ १९
र्भाधानादिकं सर्वं पूर्वोक्तविधिनाऽऽचरेत् । मूलेन पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥ २०
लशक्तितिरोधाने पाशानां च वियोजने । पञ्च पञ्चाऽऽहुतीर्दद्यादायुधेन यथा पुरा ॥ २१
ाशानायुधमन्त्रेण सप्तवाराभिजप्तया । छिन्द्यादस्त्रेण कर्तर्या कलाबीजयुजा यथा ॥ २२
ॐ हां शान्त्यतीतकलापाशाय हः, हूं फट् ॥ २३
ससृज्य वर्तुलीकृत्य पाशानस्त्रेण पूर्ववत् । घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ २४
स्त्रेण जुहुयात्पश्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधार्थं दद्यादष्टाऽऽहुतीस्ततः ॥ २५
दाशिवं हृदाऽऽवाह्य कृत्वा पूजनतर्पणे । पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ २६
ॐ हां सदाशिवं मनोबिन्दुं शुल्कं गृहाण स्वाहा ॥ २७
नाशेषदग्धपाशस्य पशोरस्य सदाशिव । बन्धाय न त्वया स्थेयं शिवाज्ञां श्रावयेदिति ॥ २८
लेन जुहुयात्पूर्णां विसृजेत्तु सदाशिवम् । ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितम् ॥ २९
ंहारमुद्रया रौद्र्या संयोज्य गुरुरात्मनि । कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया ॥ ३०
ाद्याप्यायनायास्य मस्तकेऽर्घ्याम्बुबिन्दुकम् । क्षमयित्वा महाभक्त्या पितरौ विसृजेत्तथा ॥
ेदितौ शिष्यदीक्षायै यन्मया पितरौ युवाम् । कारुण्यान्मोक्ष(च)यित्वा तद्व्रज त्वं स्थानमात्मनः
शिखामन्त्रितकर्तर्या बोधशक्तिस्वरूपिणीम् । शिखां छिन्द्याच्छिवास्त्रेण शिष्यस्य चतुरङ्गुलाम्
ॐ क्लीं शिखायै हूं फट्, ओमस्त्राय हूं फट् ॥ ३४

---

१ क. ड. च. °ताचा वि° । २ क. ङ. च. °न नियो° । ३ क. ड. च. प्राणमुद्रया । ख. ग. शूल्मुद्रया । ४ क. ड. च. °केनान्ताख्य° । ५ ख. घ. °पुट न° । ६ क. ख. ग. ड. च. वह्निकुं° । ७ ख. ॐ हरा हरू हरां फ° । ८ घ. ॥ ९ क. ड. च. हा हू । १० ख. ग. हूरू । ११ क. ङ. च. ह हामा° । १२ क. ड. च. °भिमाद° । १३ क. ड. च. हु । ख. हरूं । १४ क. च. °न नम्रो वि° । १५ क. ड. च. °त्यजान् । तु° । १६ ख. ग. °स्वके सम्य° । १७ क. ख. ग. ड. च. °द्गलम् । १८ क. ड. च. हूरू । ख. ग. हू । १९ ख. ग. हूरू । २० ख. ग. हूरू ।

सुचि तां घृतपूर्णायां गोविन्दोल्कमध्यगाम् । संविधायास्त्रमन्त्रेण हुंफडन्तेन होमयेत् ॥ ३५
ॐ ह्रौं हः, अस्त्राय हुं फट् ॥ ३६
प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्थाप्याऽऽसन्य च स्वपम् । योजनिकास्थमात्मानं शस्त्रमन्त्रेण ताडयेत्
वियोज्याऽऽकृष्य संपूज्य पूर्ववद्द्वादशान्ततः । आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत् ॥ ३८
पूरितं स्रुवमाज्येन विहिताधोमुखस्रुचा । निलोक्तविधिनाऽऽदाय शङ्खसंनिभमुद्रया ॥ ३९
प्रसारितशिरोग्रीवो नादोच्चारानुसारतः । समदेहः स्थिरश्रान्तः परभावसमन्वितः ॥ ४०
कुम्भमण्डलवह्निभ्यः शिष्यादपि निजात्मनः । गृहीत्वा षड्विधाध्वानं स्रु(स्रु)गग्रे प्राणनाडिका
संचिन्त्य बिन्दुवत्कृत्वा क्रमशः सप्तधा यथा । प्रथमं प्राणसंयोगस्वरूपमपरं ततः ॥ ४२
हृदयादिक्रमोच्चारविसृष्टं मन्त्रसंज्ञकम्* । सुषुम्नानुगतं नादस्वरूपं तु तृतीयकम् ॥ ४३
सप्तमे कारणत्यागात्प्रशान्तविस्वरं लयः । शक्तिनादोर्ध्वसंचारस्तच्छक्ति विस्वरं मतम् ॥ ४४
प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम् । तत्कालविस्वरं षष्ठं भवत्यतीतं च सप्तकम् ॥ ४५
तदेवयोजनस्थानं विस्वरं तत्त्वसंज्ञकम् । पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥ ४६
शनैरुदीरयन्मूलं कृत्वा शिष्यात्मनो लयम् । हकारे तडिदाकारे षडध्वप्राणरूपिणि ॥ ४७
उकारं परतो नाभेर्वितस्ति व्याप्य संस्थितम् । ततः परमकारस्तु हृदयाच्चतुरङ्गुलम् ॥ ४८
ॐकारवाचकं विष्णोस्ततोऽष्टाङ्गुलेकण्ठकम् । चतुरङ्गुलतालस्थं मकारं रुद्रवाचकम् ॥ ४९
तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम् । नादं सदाशिवं देवं ब्रह्मरन्ध्रावसानकम् ॥ ५०
शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात् । दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च ॥५१
द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे । भावशून्ये मनोतीते शिवे नित्यगुणोदये ॥ ५२
विलीयमानमेतस्मिंश्छिष्यात्मानं विभावयेत् । विमुञ्चन्सर्पिषो धारां ज्वालान्तेऽपि परे शिवे५३
योजनिकास्थिरत्वाय वौषडन्तशिवाणुना । दत्त्वा पूर्णां विधानेन गुणापादनमाचरेत् ॥ ५४
ॐ हामात्मने सर्वज्ञो भव स्वाहा । ॐ हामात्मने परितृप्तो भव स्वाहा । ॐ हूमात्मनेऽनादि-
बोधो भव स्वाहा । ॐ हौमात्मने स्वतन्त्रो भव स्वाहा । ॐ हौमात्मनेऽलुप्तशक्तिर्भव स्वाहा ।
ॐ हः, आत्मनेऽनन्तशक्तिर्भव स्वाहा ॥ ५५
इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् । विधिना भावनोपेतः शिष्यदेहे नियोजयेत् ॥ ५६
बीजाणुशक्तिसंपातजनितश्रमशान्तये । शिष्यमूर्ध्नि विनिःस्यन्देद्घ्यादमृतबिन्दुकम् ॥ ५७

* एतदग्रे—" पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् । " इत्यर्धमधिकं घ. पुस्तके ।

प्रणम्येशकुम्भादींश्शिवाद्दक्षिणमण्डले । सौम्यवक्त्रं न्यस्तस्थाप्य शिष्यं दक्षिणमात्मनः ॥ ५८
त्वयैवानुगृहीतोऽयं मूर्तिमास्थाय मामकीम् । देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्धय ॥ ५९
इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयम् । श्रेयस्तवास्त्विति ब्रूयादाशिषं शिष्यमादरात् ६०
ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् । पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥ ६१

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षाकथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७७३

---

अथैकोननवतितमोऽध्यायः ।

---

एकतत्त्वदीक्षाविधिः ।

ईश्वर उवाच—

अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते । सूत्रबन्धादि कुर्वीत यथायोगं निजाणुना ॥ १
कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत् । समतत्त्वं समग्राणि सूत्रे मणिगणानिव ॥ २
आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत् । मूलेन किं तु कुर्वीत सर्वशुल्कसमर्पणम् ॥ ३
प्रदद्यात्ततः पूर्णां तत्त्वग्रासोपगर्भिताम् । एकयैव यया शिष्यो निर्वाणमधिगच्छति ॥ ४
योजनार्थं शिवे चान्यां स्थिरत्वापादनाय च । दत्त्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनम् ॥ ५

इत्यादिमहापुराणे आग्नेये एकतत्त्वदीक्षाविधिकथनं नामैकोननवतितमोऽध्यायः ॥८९॥

आदितः श्लोकानां समष्ट्यङ्काः—२७७८

---

अथ नवतितमोऽध्यायः ।

---

अभिषेकादिविधिकथनम् ।

ईश्वर उवाच—

शिवमभ्यर्च्याभिषेकं कुर्याच्छिष्यादिके श्रिये । कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥
तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरम् । इक्षुकादम्बरीस्वादुमस्तूदानष्ट सागरान् ॥ २
निवेशयेद्यथासंख्यमष्टौ विद्येश्वरानथ । एकं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥ ३
त्रिमूर्तिमेकरुद्राक्षमेकनेत्रं शिवोत्तमम् । सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ४
मध्ये शिवं समुद्रं च शिवमन्त्रं च विन्यसेत् । यागालयान्दिगीशस्य रचिते स्नानमण्डपे ॥ ५
कुर्यात्करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् । श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमासनम् ॥ ६
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् । काञ्जिकौदनमृद्भस्मदूर्वागोमयगोलकैः ॥ ७
सिद्धार्थदधितोयैश्च कुर्यान्निर्मन्थनं ततः । क्षारोदानुक्रमेणाथ हृदा विद्येशसम्वरैः ॥ ८
कलशैः स्नपयेच्छिष्यं सुधाधारणयाऽन्वितम् । परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ९

---

१ क. ङ. च. 'किं नाभास्य । २ घ. 'जातना । ३ ख. 'त्त्वानि भ' । ४ क. ख. ग. ङ. च. विधेश' ।
५ ख. ग. घ. 'मूर्तेमें' । ६ ख. च. 'म सूक्ष्मा' । ७ ख. म. 'वाद्विशेश' । ८ घ. ङ. 'मानसन् । ९ ख. ग. 'मंथनं ।
१० क. ङ. च. 'सः । क्षीरो' । ११ च. 'समन्वरैः ।

स्रुचि तां घृतपूर्णायां गोविन्दोलकमध्यगाम्। संनिधायास्त्रमन्त्रेण हूंफडन्तेन होमयेत्॥ ३५
ॐ हौं हः, अस्त्राय हूं फट्॥ ३६
प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याऽऽचम्य च स्वयम्। योजनिकास्थमात्मानं शस्त्रमन्त्रेण ताडयेत्
वियोज्याऽऽकृष्य संपूज्य पूर्ववद्द्वादशान्ततः। आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत्॥ ३८
पूरितं स्रुवमाज्येन विहिताधोमुखस्रुचा। नित्योक्तविधिनाऽऽदाय शङ्खसंनिभमुद्रया॥ ३९
प्रसारितशिरोग्रीवो नादोच्चारानुसारतः। समदृष्टिः स्थिरशान्तः परभावसमन्वितः॥ ४०
कुम्भमण्डलवह्निभ्यः शिष्यादपि निजात्मनः। गृहीत्वा षड्विधाध्वानं स्रु(स्रु)गग्रे प्राणनाडिकम्
संचिन्त्य बिन्दुवद्ध्यात्वा क्रमशः सप्तधा यथा। प्रथमं प्राणसंयोगस्वरूपमपरं ततः॥ ४२
हृदयादिक्रमोच्चारविसृष्टं मन्त्रसंज्ञकम्*। सुषुम्नानुगतं नादस्वरूपं तु तृतीयकम्॥ ४३
सप्तमे कारणत्यागात्प्रशान्तविस्वरं लयः। शक्तिनादोर्ध्वसंचारस्तच्छक्ति विस्वरं मतम्॥ ४४
प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम्। तत्कालविस्वरं षष्ठं शक्त्यतीतं च सप्तकम्॥ ४५
तदेवयोजनस्थानं विस्वरं तत्त्वसंज्ञकम्। पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक्॥ ४६
शनैरुदीरयन्मूलं कृत्वा शिष्यात्मनो लयम्। हकारे तडिदाकारे षडध्वप्राणरूपिणि॥ ४७
उकारं परतो नाभेर्वितस्ति व्याप्य संस्थितम्। ततः परमकारस्तु हृदयाच्चतुरङ्गुलम्॥ ४८
ॐकारं वाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठकम्। चतुरङ्गुलतालुस्थं मकारं रुद्रवाचकम्॥ ४९
तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम्। नादं सदाशिवं देवं ब्रह्मरन्ध्रावसानकम्॥ ५०
शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात्। दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च॥ ५१
द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे। भावशून्ये मनोतीते शिवे नित्यगुणोदये॥ ५२
विलीयमानमेतस्मिञ्शिष्यात्मानं विभावयेत्। विमुञ्चन्सर्पिषो धारां ज्वालान्तेऽपि परे शिवे॥ ५३
योजनिकास्थिरत्वाय वौषडन्तामिमाणुना। दत्त्वा पूर्णां विधानेन गुणापादनमाचरेत्॥ ५४
ॐ हामात्मने सर्वज्ञो भव स्वाहा। ॐ हामात्मने परितृप्तो भव स्वाहा। ॐ हूमात्मनेऽनादि-
बोधो भव स्वाहा। ॐ हैमात्मने स्वतन्त्रो भव स्वाहा। ॐ हौमात्मनेऽलुप्तशक्तिर्भव स्वाहा।
ॐ हः, आत्मनेऽनन्तशक्तिर्भव स्वाहा॥ ५५
इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात्। विधिना भावनोपेतः शिष्यदेहे नियोजयेत्॥ ५६
शीघ्राणुशक्तिसंपातजनितश्रमशान्तये। शिष्यमूर्धनि विन्यस्येद्देवार्घादमृतबिन्दुकम्॥ ५७

---

* एतदग्रे—" पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक्। " इत्यर्धमधिकं प. पुस्तके।

---

१ ध. न. 'विन्दोल्क'। २ घ. 'प हूरुफ'। ३ क. ङ. ण. दं। ४ घ. 'च प'। ५ क. ङ. च. 'जर्ताभ्य-धर्मा'। ६ क ङ च. [illegible]। ७ क. ङ. च 'व पुत्र'। ८ क. च. ङ. प. 'सस्रुचा'। ९ ख. ग. घ. 'रशिशिवमा'। १० क ङ च 'रश्च' द्विधाऽऽध्वानं स्रुचाग्रे। ११ क ङ. च. 'विज्ञम्'। १२ क. ङ. च. 'न्त्य निर्विष्टं ध्यात्वा'। १३ क. ङ. च. 'योग ह'। १४ क. ङ. च. 'ष्टमात्र'। १५ ध. नाद ह'। १६ क. ख. ग. ङ. च. 'विदुस्त'। १७ क. ख. ङ. च. विदुरं। १८ क. ख. ग. ङ च. 'विदुस्त'। १९ क. ङ. च. 'त तु सप्तकम्'। २० घ. 'जनात्स्थं'। २१ क. ख. ग. ङ. च. विदुरं। २२ क. ख. ग. ङ. च. 'तिमान्त'। २३ ङ. च. 'काद' वा'। २४ ध. 'पश्चात् ति'। २५ घ. 'वरेष'। २६ ध. ध. ध. 'वसे वं'। २७ क. ङ. च. 'अनाद्यवि'। २८ घ 'हा। ओमा'। २९ क. ङ. च. 'स्नाने'। ३० क. ङ. च. 'न्तरद द्वादशं'। ३१ ध ध. 'ह्यद'।

प्रणम्येशकुम्भादींश्छिवाद्दक्षिणमण्डले । सौम्यवक्त्रं त्वनस्थाप्य शिष्यं दक्षिणमात्मनः ॥ ५८
त्वयैवानुगृहीतोऽयं मूर्तिमास्थाय मामकीम् । देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्धय ॥ ५९
इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयम् । श्रेयस्तवास्त्विति ब्रूयादाशिषं शिष्यमादरात् ६०
ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् । पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥ ६१

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षाकथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७७३

---

अथैकोननवतितमोऽध्यायः ।

---

एकतत्त्वदीक्षाविधिः ।

ईश्वर उवाच—

अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते । सूत्रबन्धादि कुर्वीत यथायोगं निजाणुना ॥ १
कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत् । समतत्त्वे समग्राणि सूत्रे मणिगणानिव ॥ २
आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत् । मूलेन किं तु कुर्वीत सर्वशुल्कसमर्पणम् ॥ ३
प्रदद्यात्ततः पूर्णां तत्त्वव्रातोपगर्भिताम् । एकयैव यया शिष्यो निर्वाणमधिगच्छति ॥ ४
योजनार्थे शिवे चान्यां स्थिरत्वापादनाय च । दत्त्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनम् ॥ ५

इत्यादिमहापुराण आग्नेय एकतत्त्वदीक्षाविधिकथनं नामैकोननवतितमोऽध्यायः ॥८९॥

आदितः श्लोकानां समष्ट्यङ्काः—२७७८

---

अथ नवतितमोऽध्यायः ।

---

अभिषेकादिविधिकथनम् ।

ईश्वर उवाच—

शिवमभ्यर्च्याभिषेकं कुर्याच्छिष्यादिके श्रिये । कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥
तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरम् । इक्षुकादम्बरीस्वादुमस्तूदानष्ट सागरान् ॥ २
निवेशयेद्यथासंख्यमष्टौ विद्येश्वरानथ । एकं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥ ३
त्रिमूर्तिमेकरुद्राक्षमेकनेत्रं शिवोत्तमम् । सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ४
मध्ये शिवं समुद्रं च शिवमन्त्रं च विन्यसेत् । यागालयोत्तरदिग्भागस्य रचिते स्नानमण्डपे ॥ ५
कुर्यात्करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् । श्रीपर्ण्याद्यासने तत्र विन्यस्यानन्तमासनम् ॥ ६
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् । काञ्जिकौदनमृद्भस्मदूर्वागोमयगोलकैः ॥ ७
सिद्धार्थदधितोयैश्च कुर्यान्निर्मन्थनं ततः । क्षारोदादनुक्रमेणाथ हृदा विद्येशसम्वरैः ॥ ८
कलशैः स्नपयेच्छिष्यं सुधाधारणयाऽन्वितम् । परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ९

---

१ क. ड. च. 'किं नाप्यस्य । २ घ. 'जालना । ३ ख. 'त्त्वानि ग' । ४ क. ख. ग. ड. च. विश्वेश्व' ।
५ ख. ग. घ. 'मूर्तमे' । ६ ख. ग. 'म सूक्ष्मा' । ७ ख. च. 'याद्दिशीश' । ८ घ. ङ. 'मान्सन् । ९ ख. ग. 'मँथनं ।
१० क. ड. च. 'तः । क्षीरो' । ११ च. 'शम्वरैः ।

पूर्वोदितासने शिष्यं पुनः पूर्ववदर्चयेत् । उष्णीषं योगपट्टं च मुकुटं कर्तरीं घटीम् ॥ १
अक्षमालां पुस्तकादि शिबिकाद्यधिकारकम् । दीक्षाव्याख्याप्रतिष्ठाद्यं ज्ञात्वाऽद्यप्रभृति त्वया ।
सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति । अभिवाद्य ततः शिष्यं प्रणिपत्य महेश्वरम् ॥ १
विघ्नज्वालापनोदार्थं कुर्याद्विज्ञापनां यथा । अभिषेकार्थमादिष्टस्त्वयाऽहं गुरुमूर्तिना ॥ १
संहितापारगः सोऽयमभिषिक्तो मया शिव । तूसये मन्त्रचक्रस्य पञ्च पञ्चाऽऽहुतीर्यजेत् ॥ १
दद्यात्पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे । शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात् १
लाञ्छयेदुपबद्धाय दग्धदर्भाग्रशम्बरैः । कुसुमानि करे दत्त्वा प्रणामं कारयेदमुम् ॥ १
कुम्भेऽनले शिवे स्वस्मिंस्ततस्तत्कृत्यमादिशेत् । अनुग्राह्यास्त्वया शिष्याः शास्त्रेण सुपरीक्षिता
भूपवन्मानवादीनामभिषेकादभीप्सितम् । *ॐ श्रां श्रीं पशुं हूं फडित्यस्त्रराजाभिषेकतः ॥ १

इत्याग्नेये महापुराणेऽभिषेकादिविधिकथनं नाम नवतितमोऽध्यायः ॥ ९० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७९६

---

अथैकनवतितमोऽध्यायः ।

---

अभिषिक्तेन कर्तव्यस्य तत्तद्देवतापूजनस्य विधिः ।

ईश्वर उवाच—

अभिषिक्तः शिवं विष्णुं पूजयेद्भास्करादिकान् । शङ्खभेर्यादिनिर्घोषैः स्नापयेत्पञ्चगव्यकैः ॥ १
+यो देवान्देवलोकं स याति स्वं कुलमुद्धरन् । वर्षकोटिसहस्रेषु यत्पापं समुपार्जितम् ॥ २
घृताभ्यङ्गेन देवानां भस्मी भवति पावके । आढकेन घृताद्यैश्च देवान्स्नाप्य सुरो भवेत् ॥ ३
चन्दनेनानुलिप्याथ गन्धाद्यैः पूजयेत्तथा । अल्पायासेन स्तुतिभिः स्तुता देवास्तु सर्वदा ॥ ४
अतीतानागतज्ञानमन्त्रधीभुक्तिमुक्तिदाः । गृहीत्वा प्रश्नसूत्राणि हुते द्वाभ्यां शुभाशुभम् ॥ ५
त्रिभिर्जीवो मूलधातुश्चतुर्भिर्ब्राह्मणादिधीः । पञ्चादौ भूततत्त्वादि शेषे चैवं जयादिकम् ॥ ६
एकत्रिकोऽतित्रिकान्ते पदे द्विर्मेकान्तके । अशुभं मध्यमं मध्येष्विन्द्राद्येषु नृपः शुभः ॥ ७
संख्यार्धेऽन्दे जीवितार्द्धं यमोऽब्ददशहा ध्रुवम् । सूर्येभास्येशदुर्गाश्रीविष्णुमन्त्रैर्लिखेत्कजे ॥ ८
कठिन्या जप्तया ईशृष्टे गोमूत्राकृतिरेखया । आरभ्यैकं त्रिकं यावत्त्रिचतुष्कावसानकम् ॥ ९
गर्ह्योमरुद्वीजैश्चतुःपष्टिपदे तथा । अक्षाणां पातनात्स्पर्शाद्विषमादौ शुभादिकम् ॥ १०
एकत्रिकादिमारभ्य अन्ते चाष्टत्रिकं तथा । ध्वजाद्या याः समा हीना विषमाः शोभनादिदाः ॥

---

* इदमर्धं क. ढ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ढ. च पुस्तकेषु नास्ति ।

---

१ ख. मुकुटं । २ ख. घटीम् । ३ ख. ढ. पुस्तकं । ४ ख. °मन्त्र तथा । ५ ग. ङ. च. °येदूपरत्वाय दग्धद°र्भाग्रकैः । ६ ख. ॐ श्रीं पशुहूं फ° । ७ ख. °सुपरिक्षित° । ८ क. ख. ग ङ. च. °जयदतथा । ९ क. ङ. घ. °तुर्भिर्ब्रा° । १० ख. °कात्रित्रि° । ११ क. ङ. च. °दे द्विसम° । १२ ख. °पद्मा° । १३ क. ङ. च. °ध्ये त्वथेन्द्राग्निम्° । ख. °ध्ये स्वे केन्द्राग्निम्° । १४ ख. °श्रेते जी° । १५ ख. °ब्द यमोऽब्द° । १६ क. ङ. घ. स्पृष्टो° । १७ क. ख. ग. ङ. घ. °मूत्राकृ° । १८ क. ढ. ग. °रुत्सोमरुद्वीजैश्च° । १९ घ. °ष्ट पत्त° । २० ख. त्रिधा । ङ. ढ. च. °दिदाः । शो° ।

ओंईंपञ्चविंशैः कान्तैः षोडशस्वरपूर्वगैः । आद्यैस्तैः सस्वरैः कान्तैस्त्रिपुरानाममन्त्रकाः ॥ १२
ह्रींबीजाः प्रणवाद्याः स्युर्नमोन्ता यत्र पूजने । मन्त्रा विंशतिसाहस्राः सार्धं पञ्चाधिकं ततः ॥ १३
ओंह्रींमन्त्राः सरस्वत्याश्चण्डिकायास्तथैव च । तथा गौर्याश्च दुर्गाया ओंश्रींमन्त्राः श्रियस्तथा
तथा सौंमन्त्राः सूर्यस्य ओंहौंमन्त्राः शिवस्य च । ओंगंमन्त्रा गणेशस्य ओंमन्त्राश्च तथा हरेः ॥१५
शतार्धैकाधिकैः कान्तैस्तथा षोडशभिः स्वरैः । कान्तैस्तैः सस्वरैराद्यैः कान्तैर्मन्त्रास्तथाऽखिलाः
स्त्रीश्रीदेवीविष्णूनां लक्ष्मीदेवेन्द्रवर्तनात् । शैवत्रयं पञ्चाधिकं प्रत्येकं मण्डलं क्रमात् ॥ १७
अभिषिक्तो जपेद्ध्यायेच्छिष्यादीन्दीक्षयेद्गुरुः ॥ १८

इत्यादिमहापुराणे आग्नेये ऽभिषेकेन कर्तव्यस्य तत्तद्देवतापूजनस्य विधिकथनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८१४

---

अथ द्विनवतितमोऽध्यायः ।

---

संक्षेपेण प्रतिष्ठाविधिः ।

ईश्वर उवाच—

प्रतिष्ठां संप्रवक्ष्यामि क्रमात्संक्षेपतो गुह । पीठं शक्तिं शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥१
प्रतिष्ठायाः पञ्च भेदास्तेषां रूपं वदामि ते । यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः ॥ २
स्थापनं तु यथायोगं पीठ एव निवेशनम् । प्रतिष्ठा भिन्नपीठस्य स्थितस्थापनमुच्यते ॥ ३
उत्थापनं च सा प्रोक्ता लिङ्गोद्धारपुरःसरा । यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः ॥४
आस्थापनं तदुद्दिष्टं द्विधा बिम्बादिकस्य च । आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ५
पदाधारादिभेदेन प्रासादेष्वपि पञ्चधा । परीक्षामथ मेदिन्याः कुर्यात्प्रासादकाम्यया ॥ ६
शुक्लाऽऽज्यगन्धा रक्ता च रक्तगन्धा सुगन्धिनी । पीता कृष्णा सुरागन्धा विप्रादीनां मही क्रमात्
पूर्वेशोत्तरसर्वत्र पूर्वा चैषां विशिष्यते । ओंखाते हास्तिके यस्याः पूर्णे मृदधिका भवेत् ॥ ८
उत्तमां तां महीं विद्याच्चोपयुक्तां समुत्थिताम् । अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद्गुरुः ॥ ९
नगरग्रामदुर्गार्थं गृहप्रासादकारणम् । खननैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥ १०
मण्डपे द्वारपूजादिमन्त्रतृप्त्यवसानकम् । कर्म निर्वर्त्य घोरास्त्रं सहस्रं विधिना यजेत् ॥ ११
समीकृत्योपलिप्तायां भूमौ संशोधयेद्दिशः । स्वर्णदध्यक्षतै रेखाः प्रकुर्वीत प्रदक्षिणम् ॥ १२
मध्यादीशानकोष्ठस्थे पूर्णकुम्भे शिवं यजेत् । वास्तुमभ्यर्च्य तद्योग्यैः सिक्तेत्कुद्दालकादिकम् १३

---

१ क. धारेत्° । ख. आद्यर्° । २ क. इ. च. तथ्यं । ख. तुर्यैः । ३ क. ड. च. °नान्त्रिकाः । ४ क. ड. घ. °वाः । ह्रीं° । ५ ख. पञ्चाऽधि° । ६ क. च. कर्षान्त्याः । ७ क. ख. ग. ङ. च. अर्धानन्ताः । ८ क. ङ. च. °मा । क्षौं° । ९ ख. ग. °मा क्रमे° । ८. °मा त्रैषो° । १० क. च. °स्व भानौ° । ११ क. च. अत्यन्ता । १२ क. ख. ग. ङ. च. °स्य आद्यान्ताय । १३ क. ख. ग. ङ च. °देवादेः षो° । १४ ख. तत्तद्व । १५ क. ङ. च. तु पीठस्य° । १६ क. घ ङ. च. तुष्यऽऽज्य° । १७ ख. ग. °क्ताऽऽदर° । १८ ख. ग. यदा । १९ क. ङ. च. आद्यान्ते । २० ख. पूर्वे । २१ क. च. भक्तोच्यते° । २२ ख. °चेतुरा । न° । २३ च. °द्यतन° । २४ क. ख. घ. °वर्णं पोषयेत्° । ख. घ. °वर्ण षो° ।

याम्ये रक्षोगणानिष्ट्वा विधिना दिग्बलिं क्षिपेत् । भूमिं संसिच्य संस्थाप्य कुद्दालाद्यं प्रपूजयेत् ॥
अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धे द्विजन्मनः । निधाय गीतवाद्यादिब्रह्मघोषसमाकुलम् ॥ १५
पूजां कुम्भे समाहृत्य प्राप्ते लग्नेऽग्निकोष्ठके । कुद्दालेनाभिषिक्तेन मध्वक्तेन तु खानयेत् ॥ १६
नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् । पुरस्य पूर्वसीमान्तं नयेद्यावदभीप्सितम् ॥ १७
अथ तद्रक्षणं स्थित्वा भ्रामयेत्परितः पुरम् । सिञ्चन्सीमान्तचिह्नानि यावदीशानगोचरम् ॥ १८
अर्घ्यदानमिदं प्रोक्तं तत्र कुम्भपरिभ्रमात् । इत्थं परिग्रहं भूमेः कुर्वीत तदनन्तरम् ॥ १९
कर्करान्तं जलान्तं वा शल्यदोषजिघांसया । खानयेद्कुमारीं चेद्विधिना शल्यमुद्धरेत् ॥ २०
(*अकचटतपयशहान्मानवश्चेत्प्रश्नाक्षराणि तु । अग्नेर्ध्वजादिपतिताः स्वस्थाने शल्यमाख्यानि
कर्तुश्चाङ्गविकारेण जानीयात्तत्प्रमाणतः । ) पश्वादीनां प्रवेशेन कीर्तनैर्विरुतैर्दिशः ॥ २१
मातृकामष्टवर्गाढ्यां फलके भुवि वा लिखेत् । शल्यप्रश्नं वर्गवशात्पूर्वादीशान्ततः क्रमात् ॥२२
अवर्गे चैव लोहं तु कवर्गेऽङ्गारमग्नितः । चवर्गे भस्म दक्षे स्याट्टवर्गेऽस्थि च नैर्ऋते ॥ २४
तवर्गे चेष्टका चाऽऽप्ये कपाले च पवर्गके । यवर्गे शवकीटादि शवर्गे लोहमादिशेत् ॥ २५
हवर्गे रजतं तद्वद्वर्गांश्चानर्थकरानपि । प्रोक्ष्याश्मभिः करापूरैरष्टाङ्गुलादन्तरैः ॥ २६
पादोनं खातमापूर्य सजलैर्मुद्गराहतैः । लिप्तां समप्लवां तत्र कारयित्वा भुवं गुरुः ॥ २७
सामान्यार्घ्यकरो यायान्मण्डपं वक्ष्यमाणकम् । तोरणद्वाःपतीनिष्ट्वा प्रत्यग्द्वारेण संविशेत् ॥ २८
कुर्यात्तत्राऽऽत्मशुद्ध्यादि कुण्डमण्डपसंस्कृतिम् । कलशं वर्धनीसक्तं लोकपालशिवार्चनम् ॥ २९
अग्नेर्ज्वलनपूजादि सर्वं पूर्ववदाचरेत् । यजमानान्वितो यायाच्छिलानां स्नानमण्डपम् ॥ ३०
शिलाः प्रासादलिङ्गस्य पीठा धर्मादिसंज्ञकाः । अष्टाङ्गुलोच्छ्रिताः शस्ताश्चतुरस्राः करायताः ॥
पाषाणानां शिलाः कार्या इष्टकानां तदर्धतः । प्रासादेऽश्मशिलाः शैले इष्टका इष्टकामये ॥३२
अङ्किता नववक्त्राद्यैः पङ्कजाः पङ्कजान्विताः । नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमी मता ॥
आसां पद्मो महापद्मः शङ्खोऽथ मकरस्तथा । समुद्रश्चेति पञ्चामी निधिकुम्भाः क्रमादधः ॥ ३४
नन्दा भद्रा जया पूर्णा अजिता-चापराजिता । विजया मङ्गलाख्या च धरणी नवमी शिला ३५
सुभद्रश्च विभद्रश्च सुनन्दः पुष्पनन्दकः । जयोऽथ विजयश्चैव कुम्भः पूर्णस्तथोत्तरः ॥ ३६
नवानां तु यथासंख्यं निधिकुम्भा अमी नव । आसनं प्रथमं दत्त्वाऽऽताड्योल्लिख्य शराणुना ॥
सर्वासामविशेषेण तनुत्रेणावगुण्ठनम् । मृद्भिर्गोमयगोमूत्रकषायैर्गन्धवारिणा ॥ ३८
अस्त्रेण हुंफडन्तेन मलस्नानं समाचरेत् । विधिना पञ्चगव्येन स्नानं पञ्चामृतेन च ॥ ३९
गन्धतोयान्तरं कुर्यान्निजनामाङ्किताणुना । फलैरत्नसुवर्णानां गोशृङ्गसलिलैस्ततः ॥ ४०

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ड. च. पुस्तकेषु ।

---

१ ख. ग. 'गणान्निष्टे' । २ क. ख. ग. ड. च. संस्थाप्य । ३ क. ड. च. सरक्तेन । ४ ख. ग 'मयन्परि' । ५ क. ख. ग. ड. च. अर्घदा' । ६ क. ड. च. 'रक भद्रु' । ७ क. ड. च. जिह्वास' । ८ ख. ग 'दिशाते' । ९ क. ड. च. 'वर्गे स्थिरनं' । ख. ग. 'वर्गे चरनं' । १० क. ड. च. 'द् । कवर्गे रजत तद्वद्वक्षारताव करान' । ख. ग. 'द् । कवर्गे रजतं तद्वद्वर्गानर्थकानपि । ११ च. प्रोक्ष्याऽऽश्मभिः । १२ क. ख. ग. ड. च. 'न्यार्घक' । १३ च 'प्रज्वलन' । १४ ख. ग. 'नां स्थान' । १५ च. पादप' । १६ क. च. मण्डलाङ्का । १७ क. ड. च. 'प्रदन्तक' । १८ क. ड. च. पूर्वस्त' । १९ क. ख. ग. ड. च. प्रणव । २० ख. 'च हूर्फ' । २१ क. ड. च. कुम्भाता । २२ क. ड. च. 'स्त्राणु' ।

( संक्षेपेण प्रतिष्ठाविधिः )

चन्दनेन समालभ्य वस्त्रैराच्छादयेच्छिलाम्[2] । स्वर्णोत्थमासनं दत्त्वा नीत्वा योगं[3] प्रदक्षिणम् ॥
शय्यायां कुशतल्पे वा हृदयेन निवेशयेत् । संपूज्य न्यस्य बुद्ध्यादिधरान्तं तत्त्वसंचयम् ॥ ४२
त्रिखण्डव्यापकं तत्त्वत्रयं चानुक्रमान्न्यसेत् । बुद्ध्यादौ चित्तपर्यन्ते चिन्तातन्मात्रकावधौ ॥ ४३
तन्मात्रादौ धरान्ते च शिवविद्यात्मनां स्थितिः । तत्त्वानि निजमन्त्रेण तत्त्वेशांश्च हृदाऽर्चयेत् ॥
स्थानेषु पुष्पमालादिचिह्नितेषु यथाक्रमम् ॥ ४५
ॐ हूं[6] शिवतत्त्वाय नमः । ॐ हूं[7] शिवतत्त्वाधिपतये रुद्राय नमः । ॐ हां[8] विद्यातत्त्वाय नमः । ॐ हां विद्यातत्त्वाधिपाय विष्णवे नमः । ॐ ह्यात्मतत्त्वाय नमः ॥ ॐ ह्यात्मतत्त्वाधिपतये ब्रह्मणे नमः ॥ ४६
क्ष्मावियजमानार्काग्न्यम्बुवातेन्दुखानि च । प्रतितत्त्वं न्यसेदष्टौ मूर्तीः प्रति शिलां शिलाम् ॥ ४७
स(श)र्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् । महादेवं च भीमं च मूर्तीशांश्च यथाक्रमात् ॥ ४८
ॐ धरामूर्तये नमः । ॐ[9] धराधिपतये नमः[10] ॥ ४९
इत्यादिमन्त्राल्लोकपालान्यथासंख्यं निजाणुभिः । विन्यस्य पूजयेत्कुम्भांस्तन्मन्त्रैर्वा निजाणुभिः
इन्द्रादीनां तु बीजानि वक्ष्यमाणक्रमेण तु[12] ॥ ५०
लूं रूं शूं पूं धूं यूं सूं हूं क्षूमिति ॥ ५१
उक्तो नवशिलापक्षः शिला पञ्चपदा तथा[13] । प्रतितत्त्वं न्यसेन्मूर्तीः सृष्ट्या पञ्च धरादिकाः ॥ ५२
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः । एते च पञ्च मूर्तीशा यष्टव्यास्तासु पूर्ववत् ॥ ५३
ॐ पृथ्वीमूर्तये नमः । ॐ पृथ्वीमूर्त्यधिपतये ब्रह्मणे नमः । इत्यादिमन्त्राः ॥ ५४
संपूज्य कलशान्पञ्च क्रमेण निजनामभिः । निरुन्धीत विधानेन न्यासो मध्यशिलाक्रमात् ॥ ५५
कुर्यात्प्राकारमन्त्रेण भूतिदर्भैस्तिलैस्ततः । कुण्डेषु[14] धारिकां शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥ ५६
तत्त्वतत्त्वाधिपान्मूर्तिमूर्तीशांश्च घृतादिभिः । ततो ब्रह्मांशशुद्ध्यर्थं मूलाङ्गं ब्रह्मभिः क्रमात् ॥ ५७
कृत्वा शतादिपूर्णान्तं प्रोक्ष्य[15] शान्तिजलैः शिलाः । पूजयेच्च कुशैः स्पृष्ट्वा प्रतितत्त्वमनुक्रमात् ५८
सांनिध्यमथ संधानं कृत्वा शुद्धं पुनर्न्यसेत् । एवं भागत्रये कर्म गत्वा गत्वा समाचरेत् ॥ ५९
ॐ, आम्, ईम्, आत्मतत्त्वविद्यातत्त्वाभ्यां नम इति ॥ ६०
संस्पृशेद्दर्भमूलाद्यैर्ब्रह्मांशादित्रयं क्रमात् । कुर्यात्तत्त्वानुसंधानं ह्रस्वदीर्घप्रयोगतः ॥ ६१
ॐ ह्रीम्, ॐ विद्यातत्त्वशिवतत्त्वाभ्यां नमः ॥ ६२
घृतेन मधुना पूर्णांस्ताम्रकुम्भान्सरत्नकान् । पञ्चगव्यार्घ्यसंसिक्ताल्लोकपालाधिदैवतान् ॥ ६३
पूजयित्वा निजैर्मन्त्रैः संनिधौ होममाचरेत् । शिलानामथ सर्वासां संस्मरेदधिदेवताः ॥ ६४
विद्यारूपाः कृतस्नाना हेमवर्णाः शिलाम्बराः । न्यूनादिदोषमोषार्थं[18] वास्तुमूपेश्च शुद्धये ॥
यजेदस्त्रेणं[19] मूर्धान्तमाहुतीनां शतं शतम् ॥ ६५

इत्यादिमहापुराणे आग्नेये प्रतिष्ठार्थशिलान्यासविधिकथनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८७९

---

१ क. ङ. च. °च्छिलाः । शय्येनास° । २ ख. ग. °म् । चतुष्य° । ३ घ. याम । ४ क. ङ. च. चित्त दैर्मा- त्रका° । ५ क. ङ. वरान्ते । ६ ख. ग. हूं । ७ ख. ग. हूं । ८ क. ङ. च. ह्रां । घ. ह्रीं । ९ क. ङ. च. ॐ धरा° । १० क. ङ. च. ॐ नरा° । ११ क. ङ. च. °मः । लोकपालाननन्तान्तान्य° । १२ क. ङ. च. तु । ॐ सूं हूं चूं धूं हूं प्रुमि° । १३ क. ख. ग. ङ. च. तदा । १४ क. ङ. च. कुम्भेषु । ख. कुशेषु । १५ घ. प्रोक्ष्याः । १६ क. ङ. च. दं । १७ क. ङ. च. °पनार्थं । १८ ख. °नोषार्थं । १९ क. ङ. च. °ण शुद्धपर्यन्ताहुत्यै° ।

अथ त्रिनवतितमोऽध्यायः ।

---

वास्तुपूजादिविधिः ।

ईश्वर उवाच—

ततः प्रासादमासूत्र्य वर्तयेद्वास्तुमण्डपम् । कुर्यात्कोष्ठचतुःषष्टिं क्षेत्रे वेदास्रके समे ॥ १
कोणेषु विन्यसेद्वंशौ रज्ज्वोऽष्टौ त्रिकोणगाः । द्विपदाः षट्पदास्तास्तु वास्तुं तत्रार्चयेद्यथा ॥ २
आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् । स्मरेत्पूजासु कुड्यादिनिवेशे त्वधराननम् ॥ ३
जानुनी कूर्परौ सक्थि दिशि वातहुताशयोः । पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः
अस्य देहे समारूढा देवताः पूजिताः शुभाः । अष्टौ कोणाधिपास्तत्र कोणार्धेष्वष्टसु स्थिताः ॥
षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् । मध्ये चतुष्पदो ब्रह्मा शेषास्तु पदिकाः स्मृताः
समस्तनाडीसंयोगे महामर्मानुजं हलैम् । त्रिशूलं स्वस्तिकं वज्रं महास्वस्तिकसंपुटौ ॥ ७
त्रिकटं मणिबन्धं च सुविशुद्धं पदं तथा । इति द्वादश मर्माणि वास्तोर्भित्त्यादिषु त्यजेत् ॥ ८
साज्यमक्षतमीशाय पर्जन्यायाम्बुजोदकम् । ददीताय जयन्ताय पताकां कुङ्कुमोज्ज्वलाम् ॥ ९
रत्नवारि महेन्द्राय रवौ धूम्रं वितानकम् । सत्याय घृतगोधूममाज्यभक्तं भृशाय च ॥ १०
विमांसमन्तरिक्षाय शकुन्तेभ्यश्च पूर्ववत् । मधुक्षीराज्यसंपूर्णां प्रदद्याद्वह्नये स्रु(सु)चम् ॥ ११
लाजान्पूर्णे सुवर्णाम्बु वितथाय निवेदयेत् । दद्यान्मृहस्तवे सौद्रं यमराजे पलौदनम् ॥ १२
गन्धं गन्धर्वनाथाय जिह्वां भृङ्गाय पक्षिणः । मृगाय यवपर्णानि याम्यामित्यष्ट देवताः ॥ १३
पित्रे तिलोदकं क्षीरं वृक्षजं दन्तधावनम् । दौवारिकाय देवाय प्रदद्याज्जन्तुमुद्रया ॥ १४
सुग्रीवाय दिशेत्पूपान्पुष्पदन्ताय दर्भकम् । रक्तं प्रचेतसे पद्मपसुराय सुरासवम् ॥ १५
घृतं गुडौदनं शेषे रोगाय घृतमण्डकान् । लाजान्वा पश्चिमाशायां देवाष्टकमितीरितम् ॥ १६
मारुताय ध्वजं पीतं नागाय नागकेसरम् । *मुख्ये भक्ष्याणि भल्लाटे मुद्गसूपं सुसंस्कृतम् ॥ १७
सोमाय पायसं साज्यं शालूकमृषये दिशेत् । लोपीमदितये दित्यै पुरीमित्युत्तराष्टकम् ॥ १८
मोदकान्ब्रह्मणः प्राच्यां षट्पदाय मरीचये । सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके ॥ १९
तदधःकोष्ठके दद्यात्सावित्र्यै च कुशोदकम् । दक्षिणे चन्दनं रक्तं षट्पदाय विवस्वते ॥ २०
हरिद्रौदनमिन्द्राय रक्षोधःकोणकोष्ठके । इन्द्रजयाय मिश्रान्नमिन्द्राधस्तान्निवेदयेत् ॥ २१
वारुण्यां षट्पदासीने मित्रे सगुडमोदनम् । रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे ॥ २२
तदधो रुद्रदासाय मांसं मार्गमथोत्तरे । ददीत माषनैवेद्यं षट्पदस्थे धराधरे ॥ २३

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ ख. ङ. च. °माश्रित्य व° । २ क. ख. ग. ङ. च. °र्ध्वम् । ३ क. ङ. च. °दासके । ४ क. ङ. च. °सेद्वंशौ° । ५ ख. ङ. च. °ऽष्टौ रक्षानष्टौ द्विको° । ६ ख. ग. रज्ज्वष्टौ । ७ घ. °करं वा° । ८ घ. °वेश उत्तरा° । ९ घ. °पुटे रौ° । १० क. ख. ग. ङ. °दास्तु म° । ११ [illegible] पदिका° । १२ ख. °मानुजं । १३ घ. हलम् । १४ घ. त्रिकटं । १५ क. ङ. घ. °य पद्मदैत्याय पूर्वतः । म° । १६ ख. ग. °पूर्णे श्र° । १७ क. ङ. च. ध्रुवम् । ख. ग. श्रुतम् । १८ ख. °म् । जाठौ पूर्वी । १९ क. ङ. च. °ऽधश्च प° । २० ख. ग. °वाद्भूतश्च वे । २१ ख. ग. भृङ्गाय । २२ घ. °य पद्मप° । २३ क. ङ. घ. °द्यूपान्पु । २४ घ. °स्पूपान्पु° । २५ ख. ग. मुख्ये । २६ क. ङ. च. °दूक मृषये । ग. °लूक सद्यो° । घ. °[illegible] रुपद° ।

पाय शिवकोणाधस्तद्वत्साय च तत्तले । क्रमाद्दद्याद्दधि क्षीरं पूजयित्वा विधानतः ॥ २४
तुष्पदे निविष्टाय ब्रह्मणे मध्यदेशतः । पञ्चगव्याक्षतोपेतं चरुं साज्यं निवेदयेत् ॥ २५
शादिवायुपर्यन्तकोणेष्वथ यथाक्रमम् । वास्तुबाह्ये चरक्याद्याश्चतस्रः पूजयेद्यथा ॥ २६
रक्यै सघृतं मांसं विदार्यै दधि पङ्कजम् । पूतनायै पलं पित्तं रुधिरं च निवेदयेत् ॥ २७
स्थीनि पापराक्षस्यै रक्तपित्तपलानि च । ततो माषौदनं प्राच्यां स्कन्दाय विनिवेदयेत् ॥ २८
र्यम्णे दक्षिणाशायां पूपान्कृसरया युतान् । जम्भकाय च वारुण्यामामिषं रुधिरान्वितम् ॥
दीच्यां पिलिपिच्छाय रक्ताक्षं कुसुमानि च । यजेद्वा सकलं वास्तुं कुशदध्यक्षतैर्जलैः ॥ ३०
हे च नगरादौ च एकाशीतिपदैर्यजेत् । त्रिपदा रज्जवः कार्याः षट्पदाश्च विकोणके ॥ ३१
शाद्याः पादिकास्तस्मिन्नीगाद्याश्च द्विकोष्ठगाः । षट्पदस्था मरीचा(च्या)द्या ब्रह्मा नवपदः स्मृतः
गरग्रामखेटादौ वास्तुः शतपदोऽपि वा । वंशद्वयं कोणगतं दुर्जयं दुर्धरं सदा ॥ ३३
था देवालये न्यासस्तथा शतपदे स्थितः । ब्रह्माः स्कन्दादयस्तत्र विज्ञेयाश्चैव षट्पदाः ॥ ३४
रक्याद्या भूतपदा रज्जुवंशादि पूर्ववत् । देशसंस्थापने वास्तुं चतुस्त्रिंशच्छतं भवेत् ॥ ३५
तुःषष्टिपदो ब्रह्मा मरीच्याद्याश्च देवताः । *चतुष्पञ्चाशत्पदिका आपाद्यष्टौ रसाग्निभिः ॥३६
शानाद्या नवपदाः स्कन्दाद्याः शतिकाः स्मृताः । चरक्याद्यास्तद्वदेव रज्जुवंशादि पूर्ववत् ॥
यो विंशसहस्रैस्तु वास्तुमण्डलगः पदैः । न्यासो नवगुणस्तत्र कर्तव्यो देशवास्तुवत् ॥ ३८
र्विंशत्पदा(दो) वास्तुर्वैतालाख्यश्चितौ स्मृतः । अन्यो नवपदो वास्तुः षोडशाङ्घ्रिस्तथाऽपरः
डशस्यक्षश्चादेर्मध्ये स्याच्चतुरस्रकम् । खाते वास्तुसमं पृष्ठे न्यासे ब्रह्मशिलात्मके ॥ ४०
ावाकस्य निषेधे च मूर्तिसंस्थापने तथा । पायसेन तु नैवेद्यं सर्वेषां वा प्रदापयेत् ॥ ४१
कानुक्ते तु वै वास्तुः पञ्चहस्तप्रमाणतः । गृहप्रासादमानेन वास्तुः श्रेष्ठस्तु सर्वदा ॥ ४२

इत्याग्नेये महापुराणे आग्नेये वास्तुपूजाविधिनिरूपणं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९२१

---

अथ चतुर्नवतितमोऽध्यायः ।

शिलाविन्यासविधिः ।

ईश्वर उवाच—

शादिषु चरक्याद्याः पूर्ववत्पूजयेद्बुधः । आहुतित्रितयं दद्यात्प्रतिदैवतमनुक्रमात् ॥ १
त्त्वा भूतबलिं लग्ने शिलान्यासमनुक्रमात् । मध्यसूत्रे न्यसेच्छक्तिं कुम्भं जान्वन्तमुच्चमम् ॥ २
कारारूढमूलेन कुम्भेऽस्मिन्धारयेच्छिलाम् । कुम्भानष्टौ सुभद्रादीन्दिक्षु पूर्वादिषु क्रमात् ॥ ३

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. नपाय । २ घ. तत्स्थले । ३ ख. ग. °धा । चारामी स° । ४ ख. ग. °सं पूजयित्वा विधा- तः । पू° । ५ ग. °पिञ्जाय । ६ ख. ग. °प्पापाया° । ७ क. ख. ग. ङ. च. °ष्ठगः । प° । ८ ख. ग. °स्वदा ध° । ९ ख. ग. °रकाद्या । १० क. ङ. च. °स्तुयतु° । ११ क. ङ. च. °ते प(न)ञम् । नं° । १२ ख. ग. देवता° । १३ ख. ग. पातवा° । १४ घ. °वास्तोः स° । १५ ख. °येद्गुरिः । आ° ।

लोकपालाणुभिर्न्यस्य भान्त्रेषु न्यस्तशक्तिषु । शिलास्तेष्वथ नन्दाद्याः क्रमेण विनिवेशयेत् ॥
शम्भ्वरैर्मूर्तिनाथानां यथा स्युर्भित्तिमध्यतः । *तासु धर्मादिकानष्टौ कोणात्कोणं विभागशः ॥
सुभद्रादिषु नन्दाद्याश्चतस्रोऽग्न्यादिकोणगाः । अजिताद्याश्च पूर्वादि जयादिष्वथ विन्यसेत् ॥
+ब्रह्माणं चोपरि न्यस्य व्यापकं च महेश्वरम् । चिन्तयेदेष चाऽऽत्मानं व्योमप्रासादमध्यगम्
बलिं दत्त्वा जपेदस्त्रं विघ्नदोषनिवारणम् । शिलापञ्चकपक्षेऽपि मनागुद्दिश्यते यथा ॥
मध्ये पूर्णशिलान्यासः सुभद्रकलशोऽर्धतः । पद्मादिषु च नन्दाद्याः कोणेष्वग्न्यादिषु क्रमात् ॥
मध्याभावे चतस्रोऽपि मातृवद्भावसंमताः । ॐ पूर्णे त्वं महाविद्ये सर्वसंदोहलक्षणे ॥ १
सर्व(र्वं) संपूर्णमत्रात्र कुरुष्वाङ्गिरसः सुते । ॐ नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम्
प्रासादे तिष्ठ संहृष्टा यावच्चन्द्रार्कतारकम् । आयुः कामं श्रियं नन्दे देहि वासिष्ठि देहिनाम् ।
अस्मिन्रक्षा सदा कार्या प्रासादे यत्नतस्त्वया । ॐ भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्य
आयुर्दा कामदा देवि श्रीमदा च सदा भव । ॐ जयेऽत्र सर्वदा देवि श्रीदाऽऽयुर्दा सदा भ
ॐ जयेऽत्र सर्वदा देवि तिष्ठ त्वं स्थापिता मम । नित्यं जयाय भूत्यै च स्वामिनो भव भार्गि
ॐ रिक्तेऽतिरिक्तदोषघ्ने सिद्धिमुक्तिप्रदे शुभे । सर्वदा सर्वदेशस्थे तिष्ठास्मिन्नीशरूपिणि ॥ १
गगनायतनं ध्यात्वा तत्र तत्त्वत्रयं न्यसेत् । प्रायश्चित्तं ततो हुत्वा विधिना विसृजेन्मखम् ॥ १

इत्यादिमहापुराणे आग्नेये शिलाविन्यासविधिकथनं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९२८

---

अथ पञ्चनवतितमोऽध्यायः ।

---

प्रतिष्ठाकालसामग्र्यादिविधिः ।

ईश्वर उवाच—

वक्ष्ये लिङ्गप्रतिष्ठां च प्रासादे भुक्तिमुक्तिदाम् । तां चरेत्सर्वदा मुक्तौ भुक्तौ देवदिने सति ॥
विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके । गुरुशुक्रोदये कार्या प्रथमे करणत्रये ॥
शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमं दिनम् । चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ॥
शोभनास्तिथयः शेषाः क्रूरवारविवर्जिताः । शतभिषा धनिष्ठाऽऽर्द्रा अनुराधोत्तरात्रयम् ॥
रोहिणी श्रवणश्चेति स्थिरारम्भे महोदयाः । लग्नं च कुम्भसिंहालितुलास्त्रीवृषधन्विनाम् ॥
शस्तो जीवो नवर्क्षेषु सप्तस्थानेषु सर्वदा । बुधः षडष्टदिक्सप्ततुर्येषु विनतु सितः ॥
सप्ततुंनिदशाद्विस्थः शशाङ्को बलदः सदा । रविर्दशत्रिषट्संस्थो राहुस्त्रिदशषड्गतः ॥
षड्त्रिस्थानगताः शस्ता मन्दाङ्गारकेतवः । शुभाः क्रूराश्च पापाश्च सर्वे एकादशस्थिताः ॥

---

* इतोऽर्धं क. ख. च. पुस्तकेषु नास्ति । + इतोऽर्धं ग. ङ. घ. पुस्तकेषु नास्ति ।

---

१ क. ख. घ. "न्यस्तशक्तिषु । २ ख. ग. पूर्वषु । ३ ख. ग. स्युर्मित्ति" । ४ घ. ग. तास्वथ" । ५ ख. "पेद् गजानं । ६ घ. "ष्पु चाऽऽत्मानं । ७ घ. "म मध्यगां" । ८ क. ङ. च. "प्र शस्तु" । ९ क. ख. ग. ङ. "सन्महां" । १० घ. सत्जना" । ११ ख. घ. "प्र त्वं प्राप्ता । १२ घ. "शिवान्विभाक्" । १३ [illegible] "ऽन्मुप" । १४ "भारं०" ।

वृषो दृष्टिर्मुनी पूर्णा स्त्राधिको ग्रहभूतयोः । पादिकी रामदिक्स्थाने चतुरष्टे पादवर्जिता ॥ ९
पादन्यूनचतुर्नाडीभोगः स्यान्मीनमेषयोः । वृषकुम्भौ च भुञ्जाते चतस्रः पादवर्जिताः ॥ १०
मकरो मिथुनं पञ्च चापालिहरिकर्कटाः । पादोनाः षट्तुलाकन्ये घटिकाः सार्धपञ्च च ॥ ११
केसरी वृषभः कुम्भः स्थिराः स्युः सिद्धिदायकाः । चरा धनुस्तुलामेषा द्विस्वभावास्तृतीयकाः
* कर्कटो मकरोऽलिश्च मत्रव्याकार्यनाशकाः । शुभः शुभग्रहैर्दृष्टः शस्तो लग्नः शुभाश्रितः ॥१३
गुरुशुक्रबुधैर्युक्तो लग्नो दद्याद्बलायुषी । राज्यं शौर्यं बलं पुत्रान्यशो धर्मादिकं बहु ॥ १४
प्रथमः सप्तमस्तुर्यो दशमः केन्द्र उच्यते । गुरुशुक्रबुधास्तत्र सर्वसिद्धिप्रदायकाः ॥ १५
त्र्येकादशचतुर्थस्था लग्नात्पापग्रहाः शुभाः । अतोऽन्येऽग्नौ च कर्मार्थे योज्यास्तिथ्यादयो बुधैः
धाम्नः पञ्चगुणां भूमिं त्यक्त्वा वा धामसम्मिताम् । हस्ताद्द्वादशसोपानात्कुर्यान्मण्डपमग्रतः ॥१७
चतुरस्रं चतुर्द्वारं स्नानार्थं तु तदर्धतः । +एकास्यं चतुरास्यं वा सौम्यां प्राच्युत्तरेऽथ वा ॥ १८
हास्तिको दशहस्तो वै मण्डपोऽर्ककरोऽथ वा । द्विहस्तोत्तरया वृद्ध्या शेषं स्यान्मण्डपाष्टकम् १९
*वेदी चतुष्करा मध्ये कोणस्तम्भेन संयुता । वेदीपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा२०
एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः परम् । मुष्टिमात्रं शतार्धे स्याच्छते चारत्निमानकम् ॥
हस्तं सहस्रहोमे स्यान्नियुते तु द्विहास्तिकम् । लक्षे चतुष्करं कुण्डं कोटिहोमेऽष्टहस्तकम् ॥ २२
भगाभमग्नौ खण्डेन्दु दक्षे ऽपेंसं च नैर्ऋते । षडस्रं वायवे पद्मं सौम्ये चाष्टास्रकं शिवे ॥ २३
तिर्यक्पातैसमं खातमूर्ध्वं मेखलया सह । तद्बाह्ये मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः ॥ २४
अङ्गुलैः षड्भिरेका वा कुण्डाकारास्तु मेखलाः । तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः
उच्छ्रायेणाङ्गुलं तस्माद्विस्तारेणाङ्गुलाष्टकम् । दैर्घ्यं कुण्डार्धमानेन कुण्डकण्ठसमोऽधरः ॥ २६
पूर्वाग्निवारुणकुण्डानां योनिः स्यादुत्तरानना । पूर्वानना तु शेषाणामैशान्येऽन्यतरा तयोः ॥२७
कुण्डाना पञ्चविंशो भागः सोऽङ्गुल उच्यते । प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ॥२८
शान्तिभूतिबलारोग्यपूर्वाद्या नामतः क्रमात् । पञ्चषट्सप्तहस्तानि हस्तखातस्थितानि च ॥ २९
तदर्धविस्तराणि स्युर्युतान्याम्रदलादिभिः । इन्द्रायुधोपमा रक्ता कृष्णा धूम्रा शशिप्रभा ॥ ३०
शुकाभा हेमवर्णा च पताका स्फाटिकोपमा । +पूर्वादितोऽब्जजे रक्तौ नीलाऽनन्तस्य नैर्ऋते ३१
पञ्चहस्तास्तदर्धाश्च ध्वजा दीर्घाश्च विस्तराः । हैस्त्रप्रवेशिता दण्डा ध्वजानां पञ्चहस्तकाः ॥३२
वल्मीकाद्दन्तिदन्ताग्राद्यथा वृषभशृङ्गतः । पद्मखण्डाद्वराहाच्च गोष्ठादपि चतुष्पथात् ॥ ३३
मृत्तिका द्वादश ग्राह्या वैकुण्ठेऽष्टौ पिनाकिनी । न्यग्रोधोदुम्बराश्वत्थचूतजम्बूत्वगुत्तमम् ॥ ३४
कषायपञ्चकं ग्राह्यमार्तवं च फलाष्टकम् । तीर्थाम्भांसि सुगन्धीनि तथा सर्वौषधीजलम् ॥ ३५

* इदमर्धं घ पुस्तके नास्ति । + इदमर्धं क. ङ च पुस्तकेषु नास्ति । * इदमर्धं क ङ च पुस्तकेषु नास्ति ।
+ इदमर्धं क ङ च पुस्तकेषु नास्ति ।

१ क ङ च °नै वगर्द्दी पा । ख ग °ने रुद्दी पा° । २ ख ग भेंडुना । ३ क ङ च °का । °दा । ग ग °का । °नेदा° । ४ घ °ताऽप्यनाशक । ५ क ङ च °न्ये नैष(अ) कौ । ६ क ख ग ङ च °धै । आनन्दः° । ७ क ङ च वा धनुरा° । ८ क ङ च °स्तान्वा द° । ९ क ग ग ङ च स्फला । १० ख ग °भद °पा । दौ° । ११ ख ग °म्पुखं° । १२ क ङ च कुम्भ । १३ घ °वनिरं चां° । १४ क ङ घ °न्ध्रस सं° । १५ ख ग °तराऽनघा । १६ घ पुराणा । १७ ख. ग °तिध्वा । १८ घ °का त्रिलाऽ° । १९ क ङ च हस्ताम° । २० ख ग कलाष्टकम् ।

प्रशस्तं पुष्पफलं वक्ष्ये रत्नगोशृङ्गवारि च । स्नानायापाहरेत्पञ्च पञ्चगव्यामृतं तथा ॥ ३६
पिष्टनिर्मितवस्त्रादि द्रव्यं निर्मञ्जनाय च । सहस्रशुषिरं कुम्भं मण्डलाय च रोचना ॥ ३७
शतमोषधिमूलानां विजया लक्ष्मणा बला ॥ गुडूच्यतिबला पाठा सहदेवा शतावरी ॥ ३८
ऋद्धिः सुवर्चला वृद्धिः स्नाने प्रोक्ता पृथक्पृथक् । +रक्षार्थं तिलदर्भाद्यं भस्मस्नानं तु केवलम्
यवगोधूमबिल्वानां चूर्णानि च विचक्षणः । विलेपनं सकर्पूरं स्नानार्थं कुम्भगण्डकान् ॥ ४०
खट्वा च तूलिकायुग्मं सोपधानं सवस्त्रकम् । कुर्याद्वित्तानुसारेण शयने लक्ष्यकल्पने ॥ ४१
घृतक्षौद्रयुतं पात्रं कुर्यात्स्वर्णशलाकिकाम् । वर्धनीं शिवकुम्भं च लोकपालघटानपि ॥ ४२
एकं निद्राकृते कुम्भं शान्त्यर्थं कुण्डसंख्यया । द्वारपालादिधर्मादिप्रशान्तादिघटानपि ॥ ४३
वास्तुलक्ष्मीगणेशानां कलशानपरानपि । धान्यपुञ्जकृताधारान्सवस्त्रान्स्रग्विभूषितान् ॥ ४४
सहिरण्यान्समालब्धान्गन्धपानीयपूरितान् । पूर्णपात्रफलाधारान्पल्लवाढ्यान्सलक्षणान् ॥ ४५
वस्त्रैराच्छादयेत्कुम्भानाहरेद्गौरसर्षपान् । विकिरार्थं तथा लाजाञ्ज्ञानखड्गं च पूर्ववत् ॥ ४६
सापिधानां चरुस्थालीं दर्वीं च ताम्रनिर्मिताम् । घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गकृते तथा ॥ ४७
विष्टरांस्त्रि(स्त्रि)शता दर्भदलैर्बाहुप्रमाणकान् । चतुरश्चतुरस्तद्वत्पालाशान्परिधीनपि ॥ ४८
तिलपात्रं हविष्पात्रमर्घपात्रं पवित्रकम् । पलविंशतिमानानि घण्टाधूपप्रदानकम् ॥ ४९
स्रुवस्रुवौ पिटकं पीठं व्यजनं शुष्कमिन्धनम् । पुष्पं पत्रं गुग्गुलं च घृतदीपांश्च धूपकम् ॥ ५०
अक्षतानि(?) त्रिसूत्रीं च गव्यमाज्यं यवांस्तिलान् । कुशाः शान्त्यै त्रिमधुरं समिधो दशपर्विकाः
बाहुमात्रं स्रुवं हस्तमर्कादिग्रहशान्तये । समिधोऽर्कपलाशोत्थाः खादिरामार्गपिप्पलाः(?) ॥ ५२
उदुम्बरशमीदूर्वाः कुशोत्थाः शतमष्ट च । तदभावे यवतिलौ गृहोपकरणं तथा ॥ ५३
स्थाली दर्वी पिधानादि देवादिभ्योऽंशुकद्वयम् । मुद्रा मुकुटवासांसि हारकुण्डलकङ्कणान् ॥ ५४
कुर्यादाचार्यपूजार्थं वित्तशाठ्यं विवर्जयेत् । तत्पादपादहीना च मूर्तिभृद्दक्षजापिनाम् ॥ ५५
पूजा स्याज्जापिभिस्तुल्या विप्रदैवज्ञशिल्पिनाम् । वज्रार्कशान्त्यौ नीलेऽतिनीलमुक्ताफलानि च ।
पुष्परागादिरागं च वैडू(डू)र्यं रत्नमष्टमम् । उशीरमाधवकान्ता रक्तचन्दनकागुरु ॥ ५७
श्रीखण्डं सारिकं कुष्ठं शङ्खिनी ह्योषधीगणः । हेम ताम्रमयो रङ्गं राजतं च सकांस्यकम् ॥ ५८
सीसकं चेति लोहानि हरितालं मनःशिला । गैरिकं हेम माक्षिकं पारदो वह्निगैरिकम् ॥ ५९
गन्धपाषाणकमिलाष्टौ धातवो नीरुपस्तथा । गोधूमान्सतिलान्माषान्मुद्गानप्याहरेद्यवान् ॥ ६०
नीवाराञ्श्यामकानेवं व्रीहयोऽप्यष्ट कीर्तिताः ॥ ६१

इत्यादिमहापुराण आग्नेये प्रतिष्ठासामग्र्यादिविधिकथनं नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३००९

---

* एतदर्धं नास्ति क ख घ पुस्तकेषु । + इत्यर्धं नास्ति क ख च पुस्तकेषु ।

---

१ ख ग 'वक्ष्यादि । २ ख ग द्रव्याणि' । ३ ख ग 'लाबी वि' । ४ क ख ग ङ च लक्ष्मणा । ५ क । च '[illegible] । [illegible] आणि' । ६ क ङ च 'लाम' । ७ घ सुवर्चला । ८ क ख ग ङ च स्थाने । ९ घ 'दर्भा न' । १० ख ग '[illegible]' । ११ घ '[illegible]' । १२ घ पर्यषु' । १३ क ङ च अष्टता' । १४ क ख ङ च [illegible] । १५ ख ग '[illegible]' । १६ ख ग घ पूगान्नुद' । १७ क ङ च 'भूषणम्' । १८ क ख, ङ च '[illegible]' । १९ क ङ, च '[illegible]' । २० क ख ग ङ च 'धवल' । २१ ख, ग घ 'घम् । घर्' । २२ क 'मध [illegible]' । २३ क ङ च 'हं ताम्रमार[illegible]' । घ ग 'हं ताम्रमाय स' ।

अथ षण्णवतितमोऽध्यायः ।

---

## प्रतिष्ठायामधिवासनविधिः ।

ईश्वर उवाच—

त्वा नित्यद्वयं कृत्वा प्रणवार्घकरो गुरुः । सहायैर्मूर्तिपैर्विप्रैः सह गच्छेन्मखालयम् ॥ १
न्त्यादितोरणांस्तत्र पूर्ववत्पूजयेत्क्रमात् । प्रदक्षिणक्रमादेषां शाखायां द्वारपालकान् ॥ २
चे नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ । वारुणे वृषभस्कन्दौ देवीचण्डौ तथोत्तरे ॥ ३
शाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ । पर्जन्याशोकनामानौ भूवसंजीवनामृतौ ॥ ४
द्धश्रीमदौ द्वौ द्वौ पूजयेदनुपूर्वशः । स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोन्तकैः ॥ ५
कुप्रद्ववसुद्वाःस्थप्रशन्तीनां द्वयं द्वयम् । भानुजयं युगं वेदो लक्ष्मीर्गणपतिस्तथा ॥ ६
देवा मखागारे तिष्ठन्ति प्रतितोरणम् । विघ्नसंघापनोदाय क्रतोः संरक्षणाय च ॥ [illegible]
शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् । त्रिशूलं चक्रमम्भोजं पताकाश्चार्चयेत्क्रमात् ॥ ८
ह्रूं फट्, नमः । ॐ ह्रूं फट्, हस्ते शक्तये ह्रूं फट्, नम इत्यादिमन्त्रैः ॥ ९
दः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥
नाष्टदेवताः पूज्याः पूर्वादौ भूतकोटिभिः ॥ १०
कौं कुमुदाय नम इत्यादिमन्त्रैः ॥ ११
ः त्रिपुरघ्नं च शैवत्वाख्यं यमजिह्वकम् । कालं करालिनं षष्ठमेकाङ्घ्रिं भीममष्टकम् ॥ १२
[ पूजयेद्दिक्षु क्षेत्रपालाननुक्रमात् । बलिभिः कुसुमैर्धूपैः संतुष्टान्परिभावयेत् ॥ १३
र्ध्वेलास्तलेषु वर्णेषु वंशस्थूणास्त्वनुक्रमात् । पञ्च शिलादितत्त्वानि सद्योजातादिभिर्यजेत् ॥
ाशिवपदव्यापि मण्डपं धाम शांकरम् । पताकाशक्तिसंयुक्तं तत्त्वदृष्ट्याऽवलोकयेत् ॥ १५
पान्तरिक्षभूमिष्ठविघ्नानुत्सार्य पूर्ववत् । ( + प्रविशेत्पश्चिमद्वारा शेषद्वाराणि दर्शयेत् ॥ १६
क्षेणक्रमाद्गत्वा निविष्टो वेदिदक्षिणे । उत्तराभिमुखः कुर्याद्भूतशुद्धिं यथा पुरा ॥ १७
पर्यागं विशेषार्घ्यं प्रभद्रव्यादिशोधनम् । कुर्वीत स्वात्मनः पूजां पञ्चगव्यादि पूर्ववत् ॥ )१८
ारं कलशं तस्मिन्विन्यसेत्तदनन्तरम् । विशेषार्घ्यं शिवं ध्यायेत्तत्त्वत्रयमनुक्रमात् ॥ १९
ाटस्कन्धपादान्तं शिवविद्यात्मकं परम् । रुद्रनारायणब्रह्मदैवतं निजसंच(च)रैः ॥ २०
ई हाम् ॥ २१
स्वदीश्वरांस्तत्र पूर्ववद्विनिवेशयेत् । तद्व्यापकं शिवं साङ्गं शिवदस्तं च मूर्धनि ॥ २२
रन्ध्रसंनिष्ठेन तेजसा बाह्यसान्तरम् । तमःपटलमाधूय प्रद्योतितदिगन्तरम् ॥ २३
मानं मूर्तिपैः सार्धं स्रग्वस्त्रमुकुटादिभिः । भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासिमुद्धरेत्
र्ध्वादान्तसंस्कारैः संस्कुर्यान्मखमण्डपम् । विक्षिप्य विकिरादीनि कुशकूर्चो(र्चा)पसंहरेत् २५

---

* इदमर्धं नास्ति क. ह. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ह. च. पुस्तकेषु ।

---

१ ख. ग. 'म्ये भृङ्गि' । २ क. ह. च. ॐ ह्रूं फटस्त्र' । ३ क. ह. च. महपारेश । ४ ख. ग. 'स्वरात्तृणेषु । ा, वशो स्तू' । ६ क. ह. च. 'म् । पिनाक्यं' । ७ घ. आदनन. । ८ घ. 'प्राप्नित्यतत्वाव वत्र' । ९ ख. ग. त्वाय तत्त्व' । १० ख. ग. हृद या' । ११ ख. ग. 'यण न' । १२ ख. ग. 'अविष्ठेन । १३ घ. 'मुकुटादि' । क. ह. घ. 'प्पमा तु स' । ख. ग. 'स्वचा तु स' ।

आसनीकृत्य वर्धन्या वास्त्वादीन्पूर्ववद्यजेत् । शिवकुम्भास्त्रवर्धन्यौ पूजयेच्च स्थिरासने ॥ २६
स्वदिक्षु कलशारूढाँल्लोकपालाननुक्रमात् । वाहायुधादिसंयुक्तान्पूजयेद्विधिना यथा ॥ २७
ऐरावतगजारूढं स्वर्णवर्णं किरीटिनम् । सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥ २८
सप्तार्चिषं च बिभ्राणमक्षमालां कमण्डलुम् । ज्वालामालाकुलं रक्तं शक्तिहस्तमजासनम् ॥ २९
महिषस्थं दण्डहस्तं यमं कालानलं स्मरेत् । रक्तनेत्रं खरारूढं खड्गहस्तं च नैर्ऋतम् ॥ ३०
वरुणं मकरे श्वेतं नागपाशधरं स्मरेत् । वायुं च हरिणे नीलं कुबेरं मेषसंस्थितम् ॥ ३१
त्रिशूलिनं वृषे चेशं कूर्मेऽनन्तं तु चक्रिणम् । ब्रह्माणं हंसगं ध्यायेच्चतुर्वक्त्रं चतुर्भुजम् ॥ ३२
स्तम्भमूलेषु कुम्भेषु वेद्यां धर्मादिकान्यजेत् । दिक्षु कुम्भेष्वनन्तादीन्पूजयन्त्यपि केचन ॥ ३३
शिवाज्ञां श्रावयेत्कुम्भं भ्रामयेदात्मपृष्ठगम् । पूर्ववत्स्थापयेदादौ कुम्भं तदनु वर्धनीम् ॥ ३४
शिवं स्थिरासनं कुम्भे शस्त्रार्थं च ध्रुवासनम् । पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ॥ ३५
निर्मयाम जगन्नाथ रक्ष भक्तानुकम्पया । एभिः सम्प्रार्थ्य रक्षार्थं कुम्भे खड्गं निवेशयेत् ॥ ३६
दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथ वा । मण्डलेऽभ्यर्च्य देवेशं व्रजेद्दै कुण्डसंनिधौ ॥ ३७
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्तिधारिणः । गुरोरादेशतः कुर्युर्निजकुण्डेषु संस्कृतिम् ॥ ३८
जपेयुर्जापिनोऽसंख्यं मन्त्रमन्ये तु संहिताम् । पठेयुर्ब्राह्मणाः शान्तिं स्वशाखावेदपारगाः ॥ ३९
श्रीसूक्तं पावमानीश्च मैत्रकं च वृषाकपिम् । ऋग्वेदी पूर्वदिग्भागे सर्वमेतत्समुच्चरेत् ॥ ४०
देवव्रतं तु भारुण्डं ज्येष्ठसाम रथंतरम् । पुरुषं गीतिमेतानि सामवेदी तु दक्षिणे ॥ ४१
रुद्रं पुरुषसूक्तं च श्लोकाध्यायं विशेषतः । ब्राह्मणं च यजुर्वेदी पश्चिमायां समुच्चरेत् ॥ ४२
नीलरुद्रं तथाऽथर्वी सूक्ष्मासूक्ष्मं तथैव च । उत्तरेऽथर्वशीर्षं च तत्परस्तु समुद्धरेत् ॥ ४३
आचार्यश्चाग्निमुत्पाद्य प्रतिकुण्डं प्रदापयेत् । वह्नेः पूर्वादिकान्भागान्पूर्वकुण्डादितः क्रमात् ॥ ४४
धूपदीपचरूणां च दद्यीताग्निं समुद्धरेत् । पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ॥ ४५
देशकालादिसंपत्तौ दुर्निमित्तप्रशान्तये । होमं कृत्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहाम् ॥ ४६
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत् । यजमानालंकृतास्तु व्रजेयुः स्नानमण्डपम् ॥ ४७
भद्रपीठे निधायेशं ताडयित्वाऽवगुण्ठयेत् । स्नापयेत्पूजयित्वा तु मृदा काषायवारिणा ॥ ४८
गोमूत्रैर्गोमयेनापि वारिणा चान्तराऽन्तरा । भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा ॥ ४९
दैशिको मूर्तिपैः सार्धं कृत्वा कारणशोधनम् । धर्मजप्तेन संछाद्य पीतवर्णेन वाससा ॥ ५०
संपूज्य सितपुष्पैश्च नयेदुत्तरवेदिकाम् । तत्र दत्तासनायां च शय्यायां संनिवेश्य च ॥ ५१
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत् । शलाकया सुवर्णस्य अक्षिणी शस्त्रकर्मणा ॥ ५२
भञ्जयेद्वृत्तकृत्पश्चाज्ज्ञास्त्रदृष्टेन कर्मणा । (*कृतवर्मा च शस्त्रेण लक्ष्मी (क्ष्मीं(?))शिल्पी समुल्लि०
त्र्यंशाद्धीऽथ पादार्धादर्धांशा अर्धतोऽथ वा । सर्वकामप्रसिद्धार्थं शुभं लक्ष्मावतारणम् ॥ ५४
लिङ्गदीर्घविस्ताराङ्के विभक्ते भागवर्णनात् । विस्तारो लक्ष्मदेहस्य भवेल्लिङ्गस्य सर्वतः ॥ ५५

* धनुश्चिह्नान्तर्गत नास्ति क. ट. च पुस्तकेषु।

१ ख ग 'वास्त्वधे'। २ ग ङ 'वसन्कुम्भ'। ३ घ ङ च 'दानुपूर्वेण सू'। ४ ख ग 'कुम्भस्थ'। ५ घ ङ च 'ब्दद्दिशि सु'। ६ ग 'श्वन स'। ७ घ ट घ 'सत्यमग्रम'। ख ग 'सद्यमग्नम'। ८ ग। 'ठन'। ९ ख ग द्रताऽथ न'। १० ग 'स्मार्ते'।

यवस्य नवभक्तस्य भागैरष्टाभिरायता । हास्तिके लक्ष्मरेखा च गाम्भीर्याद्विस्तरादपि ॥ ५६
एवमष्टांशवृद्ध्या तु लिङ्गे सार्धकरादिके । भवेदष्टयवा पृथ्वी गम्भीरोऽत्र च हास्तिके ॥ ५७
शांभवेषु च लिङ्गेषु पादवृद्धेषु सर्वतः । लक्ष्मदेहस्य विष्कम्भो भवेद्वै यववर्धनात् ॥ ५८
गम्भीरत्वपृथुत्वाभ्यां रेखाऽपि त्र्यंशवृद्धितः । सर्वेषु च भवेत्सूक्ष्मं लिङ्गमस्तकपस्तकम् ॥ ५९
लक्ष्मक्षेत्रेऽष्टधा भक्ते मूर्ध्नि भागद्वये शुभे । षड्भागपरिवर्तेन मुक्त्वा भागद्वयं त्वधः ॥ ६०
रेखात्रयेण संयुक्तं कारयेत्पृष्ठदेशगम् । रत्नजे लक्षणोद्धारो यवौ हेमसमुद्भवे ॥ ६१
स्वरूपलक्षणं तेषां प्रभा रत्नेषु निर्मला । (*नयनोन्मीलनं वक्त्रे सांनिध्याय च लक्ष्म तत् ॥ ६२
लक्षणोद्धाररेखां च घृतेन मधुना तथा । मृत्युंजयेन संपूज्य शिल्पिदोषनिवृत्तये ॥ ६३
अर्चयेच्च ततो लिङ्गं स्नापयित्वा मृदादिभिः । शिल्पिनं तोषयित्वा तु दद्याद्गां गुरवे ततः ॥ ६४)
लिङ्गं धूपादिभिः प्रार्च्य गायेयुर्भर्तृगाः स्त्रियः । सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ ६५
स्पृष्ट्वा च रोचनं दत्त्वा कुर्युर्निर्मन्थनादिकम् । गुडलवणधान्याकदानेन विसृजेच्च ताः ॥ ६६
गुरुमूर्तिधरैः सार्धं हृदा वा प्रणवेन वा । मृत्स्नागोमयगोमूत्रभस्मभिः सलिलान्तरम् ॥ ६७
स्नापयेत्पञ्चगव्येन पञ्चामृतपुरःसरम् । विरूक्षणं कषायैश्च सर्वौषधिजलेन वा ॥ ६८
शुभ्रपुष्पफलस्वर्णरत्नशृङ्गयवोदकैः । तथा धारासहस्रेण दिव्यौषधिजलेन च ॥ ६९
तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा । क्षीरार्णवादिभिः कुम्भैः शिवकुम्भजलेन च ॥ ७०
विरूक्षणं विलेपं च सुगन्धैश्चन्दनादिभिः । संपूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ॥ ७१
रक्तसूत्रेण नीराज्य रक्षातिलकपूर्वकम् । गीतौघैर्नलदुग्धैश्च कुशाद्यैरर्घ्यसूचितैः ॥ ७२
द्रव्यैः स्तुत्यादिभिस्तुष्टमर्चयेत्पुष्पपाणिना । समाचम्य हृदा देवं ब्रूयादुत्थीयतां प्रभो ॥ ७३
देवं ब्रह्मरथेनैव क्षिप्रं द्रव्याणि तं नयेत् । मण्डपे पश्चिमद्वारे शय्यायां विनिवेशयेत् ॥ ७४
शक्त्यादिमूर्तिपर्यन्ते विन्यसेदासने शुभे । पश्चिमे पिण्डिकां तस्य न्यसेद्ब्रह्मशिलां तथा ॥ ७५
शय्यैवाततालब्धनिद्राकुम्भं ध्रुवासनम् । प्रकल्प्य शिवकोणे च दत्त्वाऽर्घ्यं हृदयेन तु ॥ ७६
उत्थाप्योक्तासने लिङ्गं शिरसा पूर्वमस्तकम् । समारोप्य न्यसेत्तस्मिन्सृष्ट्या धर्मादिवन्दनम् ॥
दर्पौधूपं च संपूज्य तथा वासांसि वर्मणा । गृहोपकृतिनैवेद्यं हृदा दद्यात्स्वशक्तितः ॥ ७८
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके । देशिकश्च स्थितस्तत्र षट्त्रिंशत्तत्त्वसंचयम् ॥ ७९
शक्त्यादिभूमिपर्यन्तं स्वतत्त्वाधिपसंयुतम् । विन्यस्य पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ॥ ८०
(+मायापदेशशक्त्यन्तं तुर्यो(र्या)ऽष्टांशवर्तुलम् । तत्राऽऽत्मतत्त्वविद्याख्यं शिवं सृष्टिक्रमेण तु )
एकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान् । विन्यस्य मूर्तिमूर्तीशान्पूर्वादिक्रमतो यथा ॥ ८२
क्ष्मावह्नियजमानार्कजलवायुनिशाकरान् । आकाशमूर्तिरूपांस्तान्न्यसेत्तदधिनायकान् ॥ ८३
स(श)र्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् । महादेवं च भीमं च मन्त्रास्तद्वाचका इमे ॥ ८४

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु ।

१ क. ङ. च. °म्भीरा नवहा° । २ ख. °राम च दा° । ३ क. ङ. च. °लाञ्जनेप । ४ ख. ग. व्यक्ते । ५ ख. ग. °रलेखा । ६ घ. स्पृष्ट्वा । ७ क. ङ. च. °द्रव्यौद° । ख. ग. °द्रवौद° । ८ क. ङ. च. चतुर्ष्पेण । ९ घ. °मृ । मूर्ता° । १० क. ङ. च. शिवद्रव्या° । ख. ग. शिवद्र° । ११ घ. °दिव्यौकप° । १२ क. ङ. च. °नब्रह्मतावच नि° । १३ क. ङ. च. °दादद्य च । १४ घ. °न्त स्वत° । १५ ख. ग. तुर्यौऽष्टाशवतुर° ।

लवशपचयसाश्च हकारश्च निवृत्तिकाः । प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथ वा क्वचित् ॥ ८५
पञ्चकुण्डात्मके यागे मूर्तीः पञ्चाथ वा न्यसेत् । पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ ८६
क्रमात्तदधिपान्पञ्च ब्रह्माणं धरणीधरम् । रुद्रमीशं सदाख्यं च स्थण्डिन्यायेन मन्त्रवित् ॥ ८७
मुमुक्षोर्वा निवृत्ताद्या अजाताद्यास्तदीश्वराः । *शिवतत्त्वं वाऽथ सर्वत्र न्यसेद्व्याप्त्यात्मकारणम्॥
शुद्धे चाऽऽत्मनि विद्येशा अशुद्धे लोकनायकाः । द्रष्टव्या मूर्तिपाश्चैव भोगिनो मन्त्रनायकाः ॥
पञ्चविंशत्तथैवाष्ट पञ्च त्रीणि यथाक्रमम् । एषां तत्त्वं वदीशानामिन्द्रादीनां ततो यथा ॥ ९०
ॐ हां शक्तितत्त्वाय नम इत्यादि । ॐ हां शक्तितत्त्वाधिपाय नम इत्यादि । ॐ हां क्ष्मामूर्तये नमः । ॐ हां क्ष्मामूर्त्यधिपाय शिवाय नम इत्यादि । ॐ हां पृथिवीमूर्तये नमः । ॐ हां पृथिवीमूर्त्यधिपाय ब्रह्मणे नम इत्यादि । ॐ हां शिवतत्त्वाधिपाय रुद्राय नम इत्यादि ॥ ९१
नाभिकन्दात्समुत्थाप्य घण्टानादविसर्पणम् । ब्रह्मादिकारणत्यागाद्द्वादशान्तसमाश्रितम् ॥ ९२
मन्त्रं च मनसाऽभिन्नं प्राप्तानन्दरसोपमम् । द्वादशान्तात्समानीय निष्कलं व्यापकं शिवम् ॥९३
अष्ट(ष्टा)त्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् । सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निवेशयेत् ९४
जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः । पिण्डिकादिषु तु न्यासः प्रोच्यते सांप्रतं यथा ॥९५
पिण्डिकां च कृतस्नानां विलिप्तां चन्दनादिभिः । सद्वस्त्रैश्च समाच्छाद्य रन्ध्रे च भगलक्षणे॥९६
पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरतः स्थिताम् । लिङ्गवत्कृतविन्यासां विधिवत्संप्रपूजयेत् ॥ ९७
कृतस्नानादिकां तत्र लिङ्गमूले शिलां न्यसेत् । कृतस्नानादिसंस्कारं शक्त्यन्तं वृषभं तथा ॥९८
प्रणवपूर्वं हुं पूं ह्रीं मध्यादन्यतमेन च । क्रियाशक्तियुतां पिण्डीं शिलामाधाररूपिणीम् ॥ ९९
भस्मदर्भतिलैः कुर्यात्प्राकारत्रितयं ततः । रक्षायै लोकपालांश्च सायुधान्योजयेद्बहिः ॥ १००
ॐ हूं हं क्रियाशक्तये नमः । ॐ हूं हां हः, महागौरी(रि) रुद्रदयिते स्वाहेति च पिण्डिकायाम् ।
ॐ हामाधारशक्तये नमः । ॐ हां वृषभाय नमः ॥ १०१
धारिका दीप्तिमत्युग्रा ज्योत्स्ना चैता बलोत्कटाः । तथा धात्री विधात्री च न्यसेद्वा पञ्च नायिकाः
वामा ज्येष्ठा क्रिया ज्ञाना वेधा तिस्रोऽथ वा न्यसेत् । क्रिया ज्ञाना तथेच्छा च पूर्ववच्छान्तिमूर्तिषु
तमी मोहा क्षमी निष्ठा मृत्युर्मायाभवज्वराः । पञ्च चाथ महामोहा घोरा रात्रिभया ज्वरा ॥
तिस्रोऽथ वा क्रिया ज्ञाना तथा वाधोदिनायिका । आस्यादित्रिषु तत्त्वेषु तीव्रमूर्तिषु विन्यसेत्॥
अत्रापि पिण्डिका ब्रह्मशिलादिषु यथाविधि । गौर्यादिसंवरैरेव पूर्ववत्सर्वमाचरेत् ॥ १०६
एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः । कुण्डमध्ये महेशान मेखलासु महेश्वरम् ॥ १०७
क्रियाशक्तिं तथाऽन्यासु नादमोष्ठे च विन्यसेत् । घटं स्थण्डिलवह्नीशैर्नाडीसंधानकं ततः॥१०८
पद्मतन्तुसमां शक्तिमुद्घातेन समुद्यताम् । विशन्ती(न्तीं) सूर्यमार्गेण निःसरन्तीं समुद्गताम्॥ १०९
पुनश्च शून्यमार्गेण विशन्तीं स्वस्य चिन्तयेत् । एवं सर्वत्र संधेयं मूर्तिपैश्च परस्परम् ॥ ११०

---

* इदमर्धं क ङ च पुस्तकेषु नास्ति ।

---

१ ग. 'स्थानेन न' । २ क ङ च 'धिपतये न' । ३ क ङ च हां पृ' । ४ घ 'खंधीशाय । ५ ख ग. घ हां मू' । ६ क ङ च नम । ॐ । ७ ख घ 'पुभून्या' । ८ ख ग्रस्त्वा तं वृ' । ९ क ङ च हूं । ख ग. हुं । १० ध ग ॐ हूं हं कि' । ११ क ङ. च ॐ हूं हां ग, म' । १२ घ हं । १३ क ख ग ङ च रोधा । १४ घ 'रा प विनयाय' । १५ ख. ग 'धा विनायका । १६ ख. 'मुद्घाते' । १७ क ख. ग ङ. च. 'न्ती शून्यमा' ।

संपूज्य धारिकां शक्तिं कुण्डे संतर्प्य च क्रमात् । तत्त्वतत्त्वेश्वरान्मूर्तिमूर्तीशांश्च घृतादिभिः ॥
संपूज्य तर्पयित्वा तु संनिधौ संहिताणुभिः । शतं सहस्रमर्धं वा पूर्णया सह होमयेत् ॥ ११२
तत्त्वतत्त्वेश्वरान्मूर्तिमूर्तीशांश्च करेणुकान् । *तथा संतर्प्य सांनिध्ये जुहुयुर्मूर्तिपा अपि ॥ ११३
ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः । संतर्प्य शान्तिकुम्भाम्भःप्रोक्षिते कुशमूलतः ॥ ११४
लिङ्गमूलं च संस्पृश्य जपेयुर्होमसंख्यया । संनिधानं हृदा कुर्युर्वर्मणा चावगुण्ठनम् ॥ ११५
एवं संशोध्य ब्रह्मादिविष्ण्वन्तादिविशुद्धये । विधाय पूर्ववत्सर्वं होमसंख्याजपादिकम् ॥ ११६
कुशमध्याग्रयोगेन(ण) लिङ्गमध्याग्रकं स्पृशेत् । यथा यथा च संधानं तदिदानीमिहोच्यते ॥ ११
ॐ हां ईम्, ओमॅ, ओम्, ओम्, एम्, ॐ भूं भूं वायुमूर्तये नमः । ॐ हां वामॅ, आम्, ओम्,
आं पाम् ॐ भूं भूं वां वह्निमूर्तये नमः॥ ११८
एवं च यजमानादिमूर्तिभिरभिसंधयेत् । पञ्चमूर्त्यात्मकेऽप्येवं संधानं हृदयादिभिः ॥ ११९
मूलेन स्त्रीपवीजैर्वा ज्ञेयं तत्त्वत्रयात्मके । शिलापिण्डीतृषेष्वेवं पूर्णाछिन्नं सुसंवरैः ॥ १२०
भागाभागविशुद्ध्यर्थं होमं कुर्याच्छतादिकम् । न्यूनादिदोषमोक्षाय शिवेनाष्टाधिकं शतम् ॥१२१
हुत्वाऽथ यत्कृतं कर्म शिवश्रोत्रे निवेदयेत् । एतत्समन्वितं कर्म त्वच्छक्तौ च मया प्रभो॥१२२
ॐ नमो भगवते रुद्राय रुद्र नमोऽस्तु ते । विधिपूर्णमपूर्णं वा स्वशक्त्याऽऽपूर्य गृह्यताम् ॥ १२३
ॐ ह्रीं शांकरि पूरय स्वाहा, इति पिण्डिकायाम् ॥ १२४
अथ लिङ्गे न्यसेज्ज्ञानी क्रियाख्यं पीठविग्रहे । आधाररूपिणीं शक्तिं न्यसेद्ब्रह्मशिलोपरि १२५
निरुध्य सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् । एकरात्रमथो वाऽपि यद्वा सद्योऽधिवासनम् ॥ १२६
विनाऽधिवासनं यागः कृतोऽपि न फलप्रदः । स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतम् ॥१२७
शिवकुम्भादिपूजां च दिग्बलिं च निवेदयेत् । गुर्वादिसहितो वासो रात्रौ नियमपूर्वकम् ॥
+ अधिवासः स वसतेरर्थेभावे घ ईरितः ॥ १२८

इत्याग्नेये महापुराणे प्रतिष्ठायामधिवासनविधिकथनं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२११३७

---

अथ सप्तनवतितमोऽध्यायः ।

---

शिवप्रतिष्ठाविधिः ।

ईश्वर उवाच—

प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनम् । प्रविश्य प्राग्विधानेन देहशुद्ध्यादिमाचरेत् ॥ १
दिक्पतींश्च समभ्यर्च्य शिवकुम्भं च वर्धनीम् । अष्टपुष्पिकया लिङ्गं वह्निं संतर्प्य च क्रमात् ॥ २
शिवाज्ञातस्ततो गच्छेत्प्रासादं शस्त्रमुच्चरन् । तद्गतान्प्रक्षिपेद्विघ्नान्हुंफडन्तशराणुना ॥ ३

---

* इदमर्धं क. ढ. च पुस्तकेषु नास्ति । + क. ढ. च. पुस्तकेष्विदमर्धं नास्ति ।

---

१ घ. 'प्यं शांक कुं' । २ क. ढ. घ. ॐ हाम्, ओम्, ओम्, वाम्, ओं भूर्भुवो स्वर्' । ३ घ. हाम् । ४ ख. ग. 'म् ए' । ५ ख. ग. 'भूं वा' । ६ क. ढ. च. ॐ हम्, ओम्, ओम्, ओम्, वाम्, ॐ भू । ७ ख. 'म्, ओम्, ओम्, ओम्, वाम्, ॐ भूं । ८ क. ढ. च. 'तन्नयाऽथवा । ९ घ. 'शांकर सर्वारि' । १० क. ख. ग. 'द शाय' । ११ क. ढ. च. 'प्रान्हूकं' । ख. ग. 'प्रान्हुफ' ।

तन्मध्ये स्थापयेल्लिङ्गं वेधदोषविशङ्कया । तस्मान्मध्यं परित्यज्य यवार्धेन यवेन वा ॥ ४
किंचिदीशानमाश्रित्य शिलामध्ये निवेशयेत् । मूलेन तामनन्ताख्यां सर्वाधारस्वरूपिणीम् ॥ ५
सर्वगां मुष्टियोगेन विन्यसेदचलां शिलाम् । अथ वाऽनेन मन्त्रेण शिवस्याऽऽसनरूपिणीम् ॥ ६
ॐ नमो व्यापिनि भगवति स्थिरेऽचले ध्रुवे । ह्रीं लं ह्रीं स्वाहा ॥ ७
त्वया शिवाज्ञया शक्ते स्थातव्यमिह संततम् । इत्युक्त्वा च समभ्यर्च्य निरुध्यौद्बोधमुद्रया ॥ ८
वज्रादीनि च रत्नानि तथोशीरादिकौषधीः । लोहान्हेमादिकांस्यान्तान्हरितालादिकांस्तथा ॥ ९
धान्यप्रभृतिसस्यांश्च पूर्वमुक्ताननुक्रमात् । प्रभारागत्वदेहत्ववीर्यशक्तिमयानिमान् ॥ १०
भावयन्नेकचित्तस्तु लोकपालेशसंवरैः । पूर्वादिषु च गर्तेषु न्यसेदेकैकशः क्रमात् ॥ ११
हेमजं तारजं कूर्मं वृषं वा द्वारसंमुखम् । सरित्तटमृदा युक्तं पर्वताग्रमृदाऽथ वा ॥ १२
प्रक्षिपेन्मध्यगर्तादौ यद्वा मेरुं सुवर्णजम् । मधूकाक्षतसंयुक्तमञ्जनेन समन्वितम् ॥ १३
पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् । सर्वबीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत् ॥ १४
स्वर्णजं राजतं वाऽपि सर्वलोहसमुद्भवम् । सुवर्णं कुशरायुक्तं पद्मनालं ततो न्यसेत् ॥ १५
देवदेवस्य शक्त्यादिमूर्तिपर्यन्तमासनम् । प्रकल्प्य पायसेनाथ लिप्त्वा गुग्गुलुनाऽथ वा ॥ १६
श्वभ्रमाच्छाद्य वस्त्रेण तनुत्रेणास्त्ररक्षितम् । दिक्पतिभ्यो बलिं दत्त्वा समाचान्तोऽथ देशिकः ॥ १७
शिवेन वा शिलाश्वभ्रसङ्गदोषनिवृत्तये । शस्त्रेण वा शतं सम्यग्जुहुयात्पूर्णया सह ॥ १८
एकैकाहुतिदानेन संतर्प्य वास्तुदेवताः । समुत्थाप्य हृदा देवमासनं मङ्गलादिभिः ॥ १९
गुरुर्देवाग्रतो गच्छन्मूर्तिपैश्च दिशि स्थितैः । चतुर्भिः सह कर्ता च देवयानस्य पृष्ठतः ॥ २०
मामाद्रादि परिभ्रम्य भद्राख्यद्वारसंमुखम् । लिङ्गं संस्थाप्य दत्त्वाऽर्घ्यं प्रासादं संनिवेशयेत् ॥
द्वारेण द्वारबन्धेन द्वारदेशेन [1]वंद्विच्छि(तच्छि(!))ला । द्वारबन्धे शिखाशून्ये तदर्धेनार्धे तहते(!)
वर्जयन्द्वारसंस्पर्शं द्वारेणैव महेश्वरम् । देवगृहसमारम्भे कोणेनापि प्रवेशयेत् ॥ २३
अयमेव विधिर्ज्ञेयोऽव्यक्तलिङ्गेऽपि सर्वतः । गृहे प्रवेशनं द्वारे लोकैरपि समीरिता(त)म् ॥ २४
अपद्वारप्रवेशेन त्रिदुर्गोपक्षयं गृहम् । अथ पीठे च संस्थाप्य लिङ्गं द्वारस्य संमुखम् ॥ २५
तूर्यमङ्गलनिर्घोषैर्दूर्वाक्षतसमन्वितम् । समुत्तिष्ठ हृदेत्युक्त्वा महापाशुपतं पठेत् ॥ २६
आनीय पदं श्वभ्राद्देशिको मूर्तिपैः सह । पञ्चं संधारयित्वा तु विलिप्तं कुङ्कुमादिभिः ॥ २७
शक्तिशक्तिपर्यायरूपं ध्यात्वा शैव तु रक्षितम् । (कलयान्तं मूलमुच्चार्य स्पृष्ट्वा श्वभ्रे निवेशयेत् ॥
अंशेन ब्रह्मभागस्य यद्वा अंशद्वयेन च । अर्धेन वाऽष्टमांशेन सर्वस्याथ प्रवेशनम् ॥ २९
पिधाय सीसकं नाभिदीर्घाभिः सुसमाहितः । श्वभ्रं वालुकयाऽऽपूर्य यूपात्स्थिरी भवेति च) ॥
ततो लिङ्गं स्थिरीभूतं ध्यात्वा सकलरूपिणम् । मूलमुच्चार्य कलान्तं स्पृष्ट्वा च निष्कलं न्यसेत्
स्थाप्यमानं यदा लिङ्गं याम्यां दिशमथाऽऽश्रयेत् । तत्तदिग्नीशमन्त्रेण पूर्णान्तं दक्षिणान्वितम् ३२

+ एतन्नास्ति आदर्शे । = धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु ।

१ ग. 'शिर्वे:न शि' । २ क. ङ. च. 'वि स्थां' । ३ ग. 'रे ध्रु' । ४ च. हूं । ५ ख. ङ. च. 'त्वात्सो' च. 'त्स हेत्तु' । ६ क. ङ. च. 'मौदो य' । ७ ख. ग. 'त्यांना य' । ७ क. ख. ग. ङ. च. 'प्रशाल । ८ क. ङ. च. संगुणि । ९ ग. कर्तिना देवयानस्य । १० क. ङ. च. 'सामद्र । ११ क. ख. ग. ङ. च. तद्विना । द्वा' । १२ क. ङ. च. 'प्र वादेवं । स्त्रुम' । १३ ख. ग. श्व । १४ ग. स्पृष्ट्वा । १५ ख. यथा ।

सन्धस्थाने च वक्रे च चलिते स्फुटितेऽथ वा । जुहुयान्मूलमन्त्रेण बहुरूपेण वा शतम् ॥ ३३
किं चान्येष्वपि दोषेषु शिवशान्तिं समाश्रयेत् । एवं तन्यासविधिं लिङ्गे कुर्यादेवं न दोषभाक् ॥
पीठबन्धमतः कृत्वा लक्षणस्यांशलक्षणम् । गौरीमन्त्रं लयं नीत्वा सृष्ट्या पिण्डीं च विन्यसेत् ॥
संपूर्य पार्श्वसंधिं च वालुकावज्रलेपतः । ततो मूर्तिधरैः सार्धं गुरुः शान्तिपटोर्ध्वतः ॥ ३६
संस्नाप्य कलशैरन्यैस्तद्वत्पञ्चामृतादिभिः । विलिप्य चन्दनाद्यैश्च संपूज्य जगदीश्वरम् ॥ ३७
उमामहेशमन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया । व्यवस्थितत्वविन्यासं षडध्वादिपुरःसरम् ॥ ३८
कृत्वा मूर्तिं तदीशानामङ्गानां ब्रह्मणामथ । ज्ञानलिङ्गे क्रियापीठे विन्यस्य स्नापयेत्ततः ॥ ३९
गन्धैर्विलिप्य संधूप्य व्यापित्वेन शिवे न्यसेत् । स्रग्धूपदीपनैवेद्यैर्हृदयेन फलानि च ॥ ४०
विनिवेद्य यथाशक्ति समाचम्य महेश्वरम् । दत्त्वाऽर्घ्यं च जपं कृत्वा निवेद्य वरदे करे ॥ ४१
चन्द्रार्कतारकं यावन्मन्त्रेण शैवमूर्तिपैः । स्वेच्छयैव त्वया नाथ स्थातव्यमिह मन्दिरे ॥ ४२
प्रणम्यैवं बहिर्गत्वा हृदा वा प्रणवेन वा । संस्थाप्य वृषभं पश्चात्पूर्ववद्बलिमाचरेत् ॥ ४३
न्यूनादिदोषमोक्षाय ततो मृत्युजिता शतम् । शिवेन सशिवो हुत्वा शान्त्यर्थं पायसेन च ॥४४
ज्ञानाज्ञानकृतं यच्च तत्पूरय महाविभो । हिरण्यपशुभूम्यादिगीतवाद्यादिहेतवे ॥ ४५
अम्बिकेशाय तद्भक्त्या शक्त्या सर्वं निवेदयेत् । दानं महोत्सवं पश्चात्कुर्याद्दिनचतुष्टयम् ॥ ४६
त्रिसंध्यं त्रिदिनं मन्त्री होमयेन्मूर्तिपैः सह । चतुर्थेऽहनि पूर्णां च चरुकं बहुरूपिणा ॥ ४७
निवेद्य सर्वकुण्डेषु संपाताहुतिशोधितम् । दिनचतुष्टयं यावच्च निर्माल्यं तदूर्ध्वतः ॥ ४८
निर्माल्यापनयं कृत्वा स्नापयित्वा तु पूजयेत् । पूजा सामान्यलिङ्गेषु कार्या साधारणाणुभिः ॥
विधाय लिङ्गचैतन्यं कुर्यात्स्थाणुविसर्जनम् । असाधारणलिङ्गेषु क्षमस्वेति विसर्जनम् ॥ ५०
आवाहनमभिव्यक्तिर्विसर्गः शक्तिरूपता । प्रतिष्ठान्ते क्वचित्प्रोक्तं स्थिराद्याहुतिसप्तकम् ॥ ५१
स्थिरस्तथाऽप्रमेयश्चानादिबोधस्तथैव च । नित्योऽथ सर्वगश्चैवाविनाशी दृष्ट एव च ॥ ५२
एते गुणा महेशस्य संनिधानाय कीर्तिताः । ॐ नमः शिवाय स्थिरो भवेत्याहुतीनां क्रमः ॥५३
एवमेतच्च संपाद्य विधाय शिवकुम्भवत् । कुम्भद्वयं च तन्मध्यपादेककुम्भाम्भसा भवम् ॥ ५४
संस्नाप्य तद्द्वितीयं च कर्तृस्नानाय धारयेत् । दत्त्वा बलिं समाचम्य बहिर्गच्छेच्छिवाज्ञया ॥५५
जगतीबाह्यतश्चण्डमैशान्यां दिशि मन्दिरे । धामगर्भप्रमाणे च सुपीठे कल्पितासने ॥ ५६
पूर्ववन्न्यासहोमादि विधाय ध्यानपूर्वकम् । संस्थाप्य विधिवत्तत्र ब्रह्माङ्गैः पूजयेत्ततः ॥ ५७
अङ्गानि पूर्वमुक्तानि ब्रह्माणि त्वणुना यथा ॥ ५८
ए(ॐ) वं सद्योजाताय हूं फट्, नमः । ॐ विं वामदेवाय हूं फट्, नमः । ॐ ठुम्, अघोराय हूं फट्, नमः । ओम्, एवं (एनम्, ॐ)चें (त्रें)तत्पुरुषाय, चोपीशानाय च हूं फट्, नमः ॥

---

१ घ. °तेऽपि वा । २ घ. °द् । पुरुन्यासादिनालिङ्गं कुर्वीत । ३ घ. °मन्त्रविद्धि वा° । ४ ख. ग. घ. °मनम् । तं° । ५ घ. शान्ति पटो° । ६ ख. घ. °न्विप्टो° । ७ ग. सस्थाप्य । ८ घ. °द्यर्थादि° । ९ घ. ज्ञानि लि° । १० घ. °व्यस्तित्वो° । ११ ख. ग. वास । १२ क. ङ. च. बहिः कुर्ने शिवा° । १३ क. ङ. च. °नि आद्यणत्वर्चना । १४ ङ. °ज्ञानी स्वर्चना । १५ क. ङ. च °य । ॐ स° । १६ क. ङ. च. ॐ वा° । १७ क. ङ. च. ॐ थ° । १८ क. ङ. च. °न. । एर थे । घ. °मः । ॐ त° । १९ ख. घ. °च नमः । ओमी° । २० क. घ. ङ. च. °द् । ज° ।

जपं निवेद्य संतर्प्य विज्ञाप्य नतिपूर्वकम् । देवः संनिहितो यावच्चावत्त्वं संनिधो भव ॥ ६
न्यूनाधिकं च यत्किंचित्कृतमज्ञानतो मया । त्वत्प्रसादेन चण्डेश तत्सर्वं परिपूरय ॥ ६
बाणलिङ्गे बाणरोहे सिद्धलिङ्गे स्वयंभुवि । प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥ ६
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि । अभ्यर्च्य चण्डं ससुतं यजमानं हि भार्यया ॥ ६
पूर्वस्थापितकुम्भेन स्नापयेत्स्नापकः स्वयम् । स्नापकं यजमानोऽपि संपूज्य च महेशवत् ॥ ६
वित्तशाठ्यं विना दद्याद्भूहिरण्यादिदक्षिणाम् । मूर्तिपान्विधिवत्पश्चात्स्नापकान्ब्राह्मणांस्तथा ६
दैवज्ञं शिल्पिनं प्राच्यं दीनानाथादि भोजयेत् । यदत्र संमुखीभावे खेदितो भगवन्मया ॥ ६
क्षमस्व नाथ तत्सर्वं कारुण्याम्बुनिधे मम । इति विज्ञप्तियुक्ताय यजमानाय सद्गुरुः ॥ ६
प्रतिष्ठापुण्यसद्भावं स्फुरत्तारकसप्रभम् । कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥ ६
ततः पाशुपतं जप्त्वा प्रणम्य परमेश्वरम् । ततोऽपि बलिभिर्भूतान्संनिधाय निबोधयेत् ॥ ६
स्थातव्यं भवता तावद्यावत्संनिहितो हरः । (*गुरुर्वस्त्रादिसंयुक्तं सर्वोपकरणं शिल्पी तथा स्नापनमण्डपम् ॥ ७
सर्वोपकरणं शिल्पी तथा स्नापनमण्डपम् ।) अन्ये देवादयः स्थाप्या मन्त्रैरागमसंभवैः ॥ ७
आदिवर्णस्य भेदाद्वा सुतस्वव्यासिभावितः । साध्यप्रमुखदेवाश्च सरिदोषधयस्तथा ॥ [illegible]
क्षेत्रपाः किंनराद्याश्च पृथिवीतत्त्वमाश्रिताः । (+स्थानं सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ७
भुवनाधिपतीनां च स्थानं यत्र व्यवस्थितिः । अण्डवृद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदम् ७
तन्मात्रादिप्रधानान्तं पदमेतत्त्रिकं हरेः । नाट्येशगणमातॄणां यक्षेशशरजन्मनाम् ॥ ७
अण्डजाः शुद्धविद्यान्तं पदं गणपतेस्तथा । मायांसदेशशक्त्यन्तं शिवाशिवोसरोचिषाम् ) ॥ ७
पदमीश्वरपर्यन्तं व्यक्तार्चासु च कीर्तितम् । कूर्मादि कीर्तितं यच्च यच्च रत्नादिपञ्चकम् ॥ ७
प्रक्षिपेत्पीठगर्तेयां पञ्चब्रह्मशिलां विना । षड्भिर्विभाजिते गर्ते त्यक्त्वा भागं च पृष्ठतः ॥ ७
स्थापनं पञ्चमांशे च यदि वा वसुभाजिते । स्थापनं सप्तमे भागे प्रतिमासु सुखावहम् ॥ ७
धारणाभिर्विशुद्धिः स्यात्स्थापने लेपचित्रयोः । स्नानादि मानसं तत्र शिलारत्नादिवेशनम् ८
नेत्रोद्घाटनमन्त्रेण प्रासनादिप्रकल्पनम् । पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न दुष्यति ॥ ८
विधिस्तु चललिङ्गेषु संक्षेपेण निगद्यते । पञ्चभिर्वा त्रिभिर्वाऽपि पृथक्कुर्याद्विभाजिते ॥ ८०
(*भागत्रयेण भागांशो भवेद्भागद्वयेन वा । स्वपीठेष्वपि तद्वत्स्याल्लिङ्गेषु तत्त्वभेदतः ॥ ८१
भूतिप्रपर्येण संस्कारो विधिवत्स्फाटिकादिषु । किं च ब्रह्मशिलारत्नप्रभृतेर्न्यासनिवेदनम् ॥ ८४
योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् । स्वयंभूबाणलिङ्गादौ संस्कृतौ नियमो न हि ॥ ८५
स्नापनं संहितामन्त्रैर्न्यासं होमं च कारयेत् । नदीसमुद्ररोहाणां स्थापनं पूर्ववन्मतम् ॥ ८६
पीठकं मृन्मयं लिङ्गं पिष्टकादि च तत्क्षणात् । कृत्वा संपूजयेच्छुद्धं दीक्षणादिविधानतः ॥ ८७

---

* मनुविहानन्तर्गतं क. ड. च. पुस्तकेषु नास्ति । + मनुविहानन्तर्गतं नास्ति क. ड. च. पुस्तकेषु । * मनुविहानन्तर्गतो ग्रन्थो नास्ति क. ड. च. पुस्तकेषु ।

---

१ ख. ग्रन्थ । २ घ. 'पर्यन्त श' । ३ ग. आवर्तो । ४ ख. 'श्च स्थाप' । ५ क. ट. च. 'इव दोपसयस्त' । ६ घ स । ७ ख. 'न प्रभवे' । ८ ख. ग. 'लिङ्ग' । ९ ग. 'षो मुक्तिदः' । १० ग. 'दव्यास' । ११ घ. 'स्थे च' । १२ घ. पुरुषार्थिनः' । १३ ख. ग. दा । पूर्वं समय' ।

समादाय ततो मन्त्रानात्मानं संनिधाय च । तज्जले प्रक्षिपेल्लिङ्गं वत्सरात्सौमदं भवेत् ॥ ८८
विष्ण्वादिस्थापनं चैव पृथङ्मन्त्रैः समाचरेत् ॥ ८९

इत्यादिमहापुराण आग्नेये शिवप्रतिष्ठाविधिकथनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२६

---

अथाष्टनवतितमोऽध्यायः ।

गौरीप्रतिष्ठाविधिः ।

ईश्वर उवाच—

वक्ष्ये गौरीप्रतिष्ठां च पूजया सहितां शृणु । मण्डपाद्यं पुरो यच्च संस्थाप्य चाधिरोपयेत् ॥ १
शय्यायां तांश्च विन्यस्य मन्त्रान्मूर्त्यादिकान्गुह । आत्मविद्याशिवान्तं च कुर्यादीशनिवेशनम् ॥ २
शक्तिं परां ततो न्यस्य हुत्वा जप्त्वा च पूर्ववत् । संधाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम्
सदेशव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा । एवं संस्थाप्य तां पश्चाद्देवीं तस्यां नियोजयेत्
परशक्तिस्वरूपां तां स्वाणुना शक्तियोगतः । ततो न्यसेत्क्रियाशक्तिं पीठे ज्ञानं च विग्रहे ॥ ५
ततोऽपि व्यापिनीं शक्तिं समावाह्य नियोजयेत् । अम्बिकां शिवनाम्नीं च समालभ्य मपूजयेत् ६
ओम्, आधारशक्त्यै नमः । ॐ कूर्माय नमः । ॐ स्कन्दाय च तथा नमः । ॐ ह्रीं नारायणाय
नमः । ओम्, ऐश्वर्याय नमः । ओम्, अधश्छदनाय नमः ॥ ७
ॐ पद्मासनाय नमोऽभ्य संपूज्याः केशवांस्तथा ॥ ८
ॐ ह्रीं कर्णिकायै नमः । ॐ क्षं पुष्कराक्षेभ्य इहार्चयेत् ॥ ९
ॐ ह्रां पुष्ट्यै ह्रीं च ज्ञानायै ह्रूं क्रियायै ततो नमः ॥ १०
ॐ नालाय नमः । ॐ रं धर्माय नमः । रं ज्ञानाय वै नमः । ॐ वैराग्याय नमः । ॐ वैं, अध-
र्माय नमः । ॐ रम्, अज्ञानाय वै नमः । ओम्, अवैराग्याय वै नमः । अम्, अनैश्वर्याय नमः
ह्रूं वाचे ह्रूं च रागिण्यै ह्रूं ज्वालिन्यै ततो नमः । ॐ ह्रीं शमायै च नमो ह्रूं ज्येष्ठायै ततो नमः
ॐ ह्रीं रीं क्षीं नवशक्त्यै गौं च गौर्यासनाय च । गौं गौरीमूर्तये नमो गौर्या मूलमथोच्यते १३
ॐ ह्रीं सः, महागौरि रुद्रदयिते स्वाहा गौर्यै नमः ॥ १४
ॐ गां ह्रूं ह्रीं शिरो गूं स्याच्छिखायै कवचाय च । गौं नेत्राय च गौम्, अस्त्राय ॐ गौं
विज्ञानशक्तये ॥ १५

---

१ ख. ग. ठा च वि° । २ ख. ग. °शीशे नि° । ३ ख. ग. परात्तां न्य° । ४ ख. ग. अनुके विविना° । ५ ख. ग. °त् । आ° । ६ ख. ग. °पे च न° । ७ ख. ग. °स । रक्षे° । ८ ख. ग. ह्रु । ९ ख. ओम्, नम, अघश्छदनाच्छ° । १० ख. ग. द । ११ ख. °ह्रूं, ॐ नाल्य° । १२ ख. °मः । दं । १३ ख. ॐ घ° । १४ ख. °मः । रा° । ग. °मः । यशा° । १५ ग. °मः । ह्रूं वा° । १६ ख. ॐ ह्रू वा° । १७ ख. ह्रु । १८ ख. ह्रु । १९ ख. ॐ । २० ख. ह्रू । २१ ख. ग. ह्रां रीं क्षीं न° । २२ ख. ग. नवशाय च । २३ ख. °मः । रा । २४ ख. ग. ह्रू गौं शिरा गु । २५ ख. ग. गौम्° । २६ ख. ग. गौं ।

ॐ गूं क्रियाशक्तये नमः पूर्वादौ शक्रादिकान् । ॐ सुं सुभगायै नमो ह्रीं बीजललिता ततः ॥
ॐ ह्रीं कामिन्यै च नमःॐ हूं स्यात्कामशालिनी।मध्ये गौरीं प्रतिष्ठाप्य प्रार्च्य जप्त्वाऽथ सर्वभाक्

इत्यादिमहापुराणे आग्नेये गौरीप्रतिष्ठाविधिकथनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४३

---

अथ नवनवतितमोऽध्यायः ।

---

सूर्यप्रतिष्ठाविधिः ।

ईश्वर उवाच—

वक्ष्ये सूर्यप्रतिष्ठां च पूर्ववन्मण्डपादिकम् । स्नानादिकं च संपाद्य पूर्वोक्तविधिना ततः ॥ १
विप्रौमासनशय्यायां साङ्गं विन्यस्य भास्करम् । विलत्त्वं विन्यसेत्तत्र सं(स)स्वरं खादिपञ्चकम्
शुद्ध्यादि पूर्ववत्कृत्वा पिण्डीं संशोध्य पूर्ववत् । सदेशैपदपर्यन्तं विन्यस्य तत्त्वपञ्चकम् ॥ २
शक्त्या च सर्वतोमुख्या संस्थाप्य विधिवत्ततः । स्वाणुना विधिवत्सूर्यं शक्त्यन्तं स्थापयेद्गुरुः
स्वाम्यन्तमथ वाऽऽदित्यं पादान्तं नाम धारयेत् । सूर्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्याः स्थापनेऽपि च

इत्याग्नेये महापुराणे सूर्यप्रतिष्ठाविधिकथनं नाम नवनवतितमोऽध्यायः ॥ ९९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४८

---

अथ शततमोऽध्यायः ।

---

द्वारप्रतिष्ठाविधिः ।

ईश्वर उवाच—

द्वाराश्रितप्रतिष्ठायां वक्ष्यामि विधिमप्यथ । द्वाराङ्गाणि कषायाद्यैः संस्कृत्य शयने न्यसेत् ॥ १
मूलमध्याग्रभागेषु क्रमशात्मादिसेश्वरम् । विन्यस्य संनिवेश्याथ हुत्वा जप्त्वाऽत्र रूपतः ॥ २
द्वारावधो यजेद्वास्तुं तत्रैवानन्तमन्त्रतः । रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ॥ ३
यवसिद्धार्थकाक्रान्ता ऋद्धिवृद्धिमहातिलाः । गोमूत्रसर्षपरागेन्द्रमोहनीलक्ष्मणामृताः ॥ ४
रोचनौरुवचो दूर्वां प्रासादाधश्च पोटलीम् । प्रकृत्योदुम्बरे बद्ध्वा रक्षार्थं प्रणवेन तु ॥ ५
द्वारमुत्तरतः किंचिदाश्रितं संनिवेशयेत् । आत्मतत्त्वमधो न्यस्य विद्यातत्त्वं च शाखयोः ॥ ६
शिवमाकाशदेशे च व्यापकं सर्वमण्डले । ततो महेशनाथं च विन्यसेन्मूलमन्त्रतः ॥ ७
द्वाराश्रितांश्च तत्पादीन्कृतयुक्तैः स्वनामभिः । जुहुयाच्छतमर्धं वा द्विगुणं शक्तितोऽथ वा ॥ ८
न्यूनादिदोषमोक्षार्थं हेतितो जुहुयाच्छतम् । दिग्बलिं पूर्ववद्दत्त्वा प्रदद्याद्दक्षिणादिकम् ॥ ९

इत्यादिमहापुराणे आग्नेये द्वारप्रतिष्ठाविधिकथनं नाम शततमोऽध्यायः ॥ १०० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२५७

---

१ ख. ग. ॐ मूर्ति° । २ घ. ख । ३ ख. ग. नम, ॐ ह्रीं बीजालयाय नम. । ॐ । ४ ख. ग. °शादार्थ° ५ घ. °शाद° । ६ घ. ग. °लं यदा तथाम । ७ ख. ग. °थायां च° । ८ ख. ग. °तः । चन्द्रादि° । ९ ख. ° °द्वारस्य° । १० घ. ग. °द्विसह° । ११ ख. °नामगुरा बू° । घ. °ना यसदूर्वा प्रापासा° । १२ ख. पोच्छलीम् । ° °प्लम् । १३ ख. ग. °म् । हनां ह्रंतु° । १४ घ. °दत्त्वा प्र° ।

अथैकाधिकशततमोऽध्यायः ।

---

प्रासादप्रतिष्ठा ।

ईश्वर उवाच—

ासादस्थापनं वक्ष्ये तच्चैतन्यसुयोगतः । शुकनासासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ॥ १
ाधारशक्तितः पद्मे विन्यस्ते प्रणवेन च । स्वर्णादिकलशोद्भूतं पञ्चगव्येन संयुतम् ॥ २
मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकम् । सवस्त्रं गन्धलिप्तं च गन्धवत्पुष्पधूपितम् ॥ ३
ूताादिपल्लवानां च कृत्वा कुम्भं च विन्यसेत् । पूरकेण समादाय सकलीकृतविग्रहः ॥ ४
ोस्याभिममात्मानं स्वाणुना स्वान्तमारुतः । ओङ्कायाऽऽरोपयेत्कुम्भे रेचकेन ततो गुरुः ॥ ५
ादशान्तात्समादाय स्फुरद्वह्निकणोपमम् । निक्षिपेत्कुम्भगर्भे च न्यस्ततत्त्वादिविग्रहम् ॥ ६
वेग्रहं तद्गुणानां च बोधकं च कलादिकम् । * शान्तं वागीश्वरं तत्तु ध्यातं तत्र निवेशयेत् ॥ ७
दश नाडीर्दश प्राणानिन्द्रियाणि त्रयोदश । तदधिपांश्च संयोज्य प्रणवाद्यैः स्वनामभिः ॥ ८
स्वकार्यकारणत्वेन मायाकाशनियोजिकाः । विद्येशान्प्रेरकान्शंभुं व्यापिनं च सुसंवरैः ॥ ९
अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया । सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषानुगम् ॥ १०
ञ्चगव्यकषायाद्यैः पूर्ववत्संस्कृतं ततः । शय्यायां कुम्भमारोप्य ध्यात्वा रुद्रमुमापतिम् ॥ ११
तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत् । संनिधानाय होमं च प्रोक्षणं स्पर्शनं जपम् ॥ १२
ांनिध्यबोधनं सर्वं भागत्रयविभागतः । विधायैवं प्रकृत्यन्ते कुम्भे तं विनिवेशयेत् ॥ १३

इत्यादिमहापुराणे आग्नेये प्रासादप्रतिष्ठावर्णनं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२७०

---

अथ द्व्यधिकशततमोऽध्यायः ।

---

ध्वजारोपणम् ।

ईश्वर उवाच—

चूलके ध्वजदण्डे च ध्वजे देवकुले तथा । प्रतिष्ठा च यथोदिष्टा तथा स्कन्द वदामि ते ॥ १
(+कभागार्धप्रवेशाद्वा यद्वा सर्वाधिवेशनात् । पेटके दारुजः शूलः शैलजे धाम्नि शैलजः) ॥ २
वैष्णवादौ च चक्राद्यः कुम्भः स्यान्मूर्तिमानतः । स च त्रिशूलयुक्तस्तु अग्रचूलाभिधो मतः ॥ ३
ईशशूलः समाख्यातो मूर्ध्नि लिङ्गसमन्वितः । बीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः ॥ ४
चित्रो ध्वजश्च जङ्घातो यथा जङ्घार्धतो भवेत् । भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया ॥ ५

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

---

१ घ. 'तन्य हार्ये' । २ च. 'वासार्ग' । ३ क. ख. घ. तु पूर्वे । ४ ख. ग. 'न्यस्तदृश' । ङ. 'न्यस्य प्र' । ५ घ. 'म्' स्ववपुं । ६ क. च. च वर्णीकुल युनस्त्वेर । ङ. च वर्णीकृत्वानुसन्धयेत् । ७ क. ख. ग. ङ. च. 'ह्मति' । ८ घ. 'वोलभि' । ९ क. ङ. च. आज्ञानारोपयेद्दत्तो रे' । घ. आज्ञा बोध' । १० ख. ग. वामेभरं । ११ घ. माव । १२ ख. ग. 'वामकाः । १३ क. घ. ङ. च. 'निध्यावो' । १४ घ. ते । वदामि' । १५ क. ङ. पकायो । ख. ग. पकायः । १६ पेटकाद्यः । क. जङ्घाता । ख. ङ. सगाता ।

महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः । शर्कराद्यै रसैर्वाऽपि हस्तैर्दण्डस्तु संमितः ॥ ६
उत्तमादिक्रमेणैव विज्ञेयः सूरिभिस्तथा । वंशजः शालजादिर्वा स दण्डः सर्वकामदः ॥ ७
अथ पारोप्यमाणस्तु भङ्गमायाति वै यदि । राज्ञोऽनिष्टं विजानीयाद्यजमानस्य वा तथा ॥ ८
मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत् । द्वारपालादिपूजां च मन्त्राणां तर्पणं तथा ॥ ९
विधाय चूलकं दण्डं स्नापयेदस्त्रमन्त्रतः । अनेनैवोक्तमन्त्रेण ध्वजं संप्रोक्ष्य देशिकः ॥ १०
मृत्कषायादिभिः स्नानं प्रासादं कारयेत्ततः । विलिप्य रसमाच्छाद्य शय्यायां न्यस्य पूर्ववत्।
*चूलके लिङ्गवन्न्यासो नैव ध्यानं न च क्रिया । विशेषार्घ्यं चतुर्थीं च नैव कुण्डस्य कल्पना
दण्डे ह्यथाऽऽत्मतत्त्वं च विद्यातत्त्वं द्वितीयकम् । सद्योजातादिवक्त्राणि शिवतत्त्वं पुनर्ध्वजे ॥ १३
निष्कलं च शिवं तत्र न्यस्याङ्गानि प्रपूजयेत् । चूलके च ततो मन्त्री सांनिध्ये संहिताणुभिः १४
होमयेत्प्रतिभागं च ध्वजे तैस्तु फडन्तकैः । अन्यथाऽपि कृतं यच्च ध्वजसंस्कारणं क्वचित् ॥ १५
अक्षयोगविधावेवं तत्सर्वमुपदर्शितम् । प्रासादे कारितेस्थाने स्रग्वस्त्रादिविभूषिते ॥ १६
जङ्घा वेदी तदूर्ध्वे तु नितत्त्वादि निवेश्य च । होमादिकं विधायाथ शिवं संपूज्य पूर्ववत्॥ १७
सर्वतत्त्वमयं ध्यात्वा शिवं च व्यापकं न्यसेत् । अनन्तं कालरुद्रं च विभाव्य च पदाम्बुजे॥ १८
कूष्माण्डहाटकौ पीठे पातालनरकैः सह । भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतम् ॥ १९
ब्रह्माण्डकमिदं ध्यात्वा जङ्घायां च विभावयेत् । वारितेजोनिलव्योमपञ्चाष्टकसमन्वितम्॥ २०
सप्तावरणसंघं च बुद्धियोन्यष्टकान्वितम् । योगाष्टकसमायुक्तं नाशावधि गुणत्रयम् ॥ २१
पटेस्थं पुरुषं सिद्धं वामं च परिभावयेत् । मञ्जरीवेदिकायां च विद्यादिकचतुष्टयम् ॥ २२
कण्ठे मायां सरुद्रां च विद्यांश्चामलसारके । कलशे चेश्वरं बिन्दुं विद्येश्वरसमन्वितम् ॥ २३
जटाजूटं च तं विद्याच्छूलं चन्द्रार्धरूपकम् । शक्तित्रयं च तत्रैव दण्डे नादं विभाव्य च ॥ २४
ध्वजे च कुण्डलीं शक्तिमिति धाम्नि विभावयेत्। जगत्यां वाऽथ संधाय लिङ्गं पिण्डिकयाऽथ वा
संमुत्थाप्य सुमन्त्रैश्च निर्मिस्ते शक्तिपङ्कजे । न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत् ॥ २६
यजमानो ध्वजे लग्ने बन्धुमित्रादिभिः सह । धाम प्रदक्षिणीकृत्य लभते फलमीहितम् ॥ २७
+गुरुः पाशुपतं ध्यायन्स्थिरमन्त्रोऽपि पर्युतम् । अधिपाङ्गास्त्रयुक्तांश्च रक्षणाय नियोजयेत् ॥ २८
ऊनादिदोषशान्त्यर्थं हुत्वा दत्त्वा च दिग्बलिम् । गुरवे दक्षिणां दद्याद्यजमानो दिवं व्रजेत्॥ २९
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः । तावद्युगसहस्राणि कर्तुर्भोगभुजः फलम् ॥ ३०

इत्यादिमहापुराणे आग्नेये ध्वजारोपणादिविधिकथनं नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३००

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ ख. °जः शाक° । २ क. ङ. च. चूलकं । ख. चूलकं । ३ क. ङ. च. °ष्य च समासाद्य । ४ घ. चूडके । ५ ख. ग. न चाराद्य न च क्रिया । ६ क. ङ. च. नवचण्ड° । ७ ग. कुम्भस्य । ८ क. ङ. च. तथाऽऽत्मत° । घ. तथाऽर्थ° । ९ ख. ग. °तानि चक्राणि । घ. °तानि वक्त्राणि । १० क. ङ. च. चूलके । घ. चूडके । ११ क. °नित्येऽहिताणुभिः । ङ. च. °नित्योद्दिताणुभिः । १२ ख. ग. °याग विधायैव । १३ घ. °रिते स्था° । १४ ग. च °तं° यो° । घ. च शुद्धं° । १५ ङ. च. पुटस्थं । १६ क. ङ. च. वाम । १७ क. ङ. च. मायाधमक च । १८ ख. °स्त्राधाम । १९ घ. ङ. च. लिङ्गपि° । २० ख. ग. समुत्थाप्य । २१ ख. ग. °न्यसेच्छक्ति° । २२ क. ख. ग. ङ. च. लग्ने । २३ क. ङ. च. धाम । ख. ग. वामे । २४ ख. ग. गुरु । २५ ख. °त्राद्भिर्यु° ।

अथ त्र्यधिकशततमोऽध्यायः ।

## जीर्णोद्धारविधिः ।

ईश्वर उवाच—

जीर्णादीनां च लिङ्गानामुद्धारं विधिना वदे । लक्ष्मोज्झितं च भग्नं च स्थूलं वज्रहतं तथा ॥ १
संपुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादिकम् । इत्यादिदुष्टलिङ्गानां त्याज्या पिण्डी तथा वृषः ॥ २
चालितं चलितं निम्नमत्यर्थं विषमस्थितम् । दिङ्मूढं पातितं लिङ्गं मध्यस्थं पतितं तथा ॥ ३
एवंविधं च संस्थाप्य निर्व्रणं च भवेद्यदि । *अनादेयेन मन्त्राहेण तदप्याक्रियते यदि ॥ ४
ततोऽन्यत्रापि संस्थाप्य विधिदृष्टेन कर्मणा । सुस्थितं चास्थितं वाऽपि शिवलिङ्गं न चालयेत् ५
शतेन स्थापनं कुर्यात्सहस्रेण तु चालनम् । पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम् ॥ ६
याम्ये मण्डपमीशे चैं प्रत्यग्द्वारैकतोरणम् । विधाय द्वारपूजादि स्थण्डिले मन्त्रपूजनम् ॥ ७
दिग्बलिं च बहिर्दत्त्वा समाचम्य स्वयं गुरुः । ब्राह्मणान्भोजयित्वा तु शंभुं विज्ञापयेत्ततः ॥ ८
दुष्टं लिङ्गमिदं शंभो शान्तिरुद्धरणस्य चेत् । रुचिस्तवास्ति विधिना अधितिष्ठ च मां शिव ॥ ९
एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत् । मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ॥ १०
ततो लिङ्गं च संस्थाप्य पूजयेत्स्थण्डिले तथा । +ॐ व्यापकेश्वरायेति तत्त्वेनात्मन्तवादिना ११
ॐ व्यापकेश्वराय हृदयाय नमः । ॐ व्यापकेश्वराय शिरसे नमः । इत्याद्यङ्गमन्त्राः ॥ १३
ततस्तत्राऽऽश्रितं तत्त्वं श्रावयेदस्त्रमन्त्रतः । सत्त्वः कोऽपीह यैः कश्चिल्लिङ्गमाश्रित्य तिष्ठति ॥ १४
लिङ्गं त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु । विद्याविद्येश्वरैर्युक्तैः शंभुरत्र भविष्यति ॥ १५
सहस्रं प्रतिभागे(गं) च ततः पाशुपताणुना । हुत्वा शान्त्यम्बुना प्रोक्ष्य स्पृष्ट्वा कुशैर्जपेत्ततः १६
दत्त्वाऽर्घं(र्घ्यं) च विलोमेन तत्त्वतत्त्वाधिपांस्ततः । अष्टमूर्तीश्वरांल्लिङ्गपिण्डिकासंस्थितान्गुरुः १७
विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा । रज्ज्वा बद्ध्वा तया नीत्वा शिवमन्त्रं गृणञ्जनैः १८
तज्जले निक्षिपेन्मन्त्री पुष्ट्यर्थं जुहुयाच्छतम् । तृप्तये दिक्पतीनां च वास्तुशुद्धौ शतं शतम् ॥ १९
रक्षां विधाय तद्धाम्नि महापाशुपतास्त्रतः । लिङ्गमन्यत्ततस्तत्र विधिवत्स्थापयेद्गुरुः ॥ २०
असुरैर्मुनिभिर्गोत्रैस्तन्त्रविद्भिः प्रतिष्ठितम् । जीर्णं वाऽप्यथ वा भग्नं विधिनाऽपि न चालयेत् २१
एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ । खड्गे मन्त्रगणं न्यस्य कारयेन्मन्दिरान्तरम् ॥ २२
संकोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः । तद्द्रव्यं श्रेष्ठद्रव्यं वा तत्कार्यं तत्प्रमाणकम् ॥ २३

इत्यादिमहापुराणे आग्नेये जीर्णोद्धारविधिर्नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२२

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ घ. °लक्ष्म । २ घ. °त लिङ्गम° । ङ °त चैवम° । ३ घ. °दि । मन्त्रादेक° । ४ क. च. °व पतितं । घ. °त सुस्थित । ङ. °तं दूषित । ५ घ. [illegible] । ६ क. च. °वेत प्रयु° । ख. ग. °ष्ठ्याप्रयु° । ङ. °ले यन्त्र° । ७ घ. °माहिरि° । ८ घ. °हत्वा मां । ९ घ. °ति नालस्व शिवना° । १० घ. °मक हृदयेश्वराय न° । १० ख. ग. दूलम्बा° । ११ घ. च. °ऽ मन्त्र आर्थं° । १२ घ. °मस्ततः । १३ ख. च. °तः । ततः कोऽ° । १४ क. ग. ङ. च. घ. कोऽपि लिङ्ग° । १५ ख. घ. ङ. च. °ष्ट तु गतोऽत्र । १६ ख ग. °तः । स्पृष्ट्वा° । १७ ग. च. °लिङ्गे लि° । १८ घ. °पुष्टौ श° । १९ ख. घ. तद्धाम्नि । २० घ. च. °लिङ्गेस्थापयि° । २१ — ङ. च. उद्धृतं । २२ ख. च. °मन्त्रगणं न्य° । २३ क. ङ. च व्याप्य ।

अथ चतुरधिकशततमोऽध्यायः ।

---

प्रासादलक्षणम् ।

ईश्वर उवाच—

वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज । चतुर्भागीकृते क्षेत्रे भित्तेर्भागेन विस्तरात् ॥ १
*अर्द्धभागेन(ण) गर्भः स्यात्पिण्डिका पादविस्तरात् । पञ्चभागीकृते चापि मध्यभागे तु पिण्डिका
शुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात् । भागौ द्वौ मध्यमे गर्भे ज्येष्ठे भागद्वयेन तु ॥ २
त्रिभिस्तु कन्यसो(?) गर्भः शेषभित्तिरिति क्वचित् । षोढा भक्तेऽथ वा क्षेत्रे भित्तिर्भागैकविस्तरात्
गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका । विस्ताराद्द्विगुणो वाऽपि सपादद्विगुणोऽपि वा ५
अर्धार्धद्विगुणो वाऽपि त्रिगुणः क्वचिदुच्छ्रयः । जगती विस्तरार्धेन त्रिभागेन(ण) क्वचिद्भवेत् ॥६
नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः । परिधिस्त्र्यंशको मध्यो रथकांस्तत्र कारयेत् ॥ ७
चामुण्डभैरवं तेषु नाट्येशं च निवेशयेत् । प्रासादार्धेन देवानामष्टौ वा चतुरोऽपि वा ॥ ८
प्रदक्षिणावहाः कु(हान्कु)र्यात्प्रासादादिषु वानराः(न्) । आदित्याः पूर्वतस्थाप्याः स्कन्दो-
ग्नियौगुगोचरे ॥ ९
एवं यमाद्यो न्यस्याः स्वस्यां स्वस्यां दिशि स्थिताः । चतुर्धा शिखरं कृत्वा शुकनासा त्रिभागिका
तृतीये वेदिकां त्वमेः सकण्ठोऽमलसारकः । वैराजः पुष्पकश्चान्यः कैलासो मणिकस्तथा ॥११
त्रिविष्टपश्च पञ्चैव मेरुमूर्धनि संस्थिताः । चतुरस्रस्तु तत्राऽऽद्यो द्वितीयोऽपि तदायतः ॥ १२
वृत्तो वृत्तायतश्चान्यो ह्यष्टास्रश्चापि पञ्चमः । एकैको नवधा भेदैश्चत्वारिंशच्च पञ्च च ॥ १३
प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा । विमानं च तथा भद्रः सर्वतोभद्र एव च ॥ १४
चरुको नन्दको नन्दिवर्धमानस्तथाऽपरः । श्रीवत्सश्चेति वैराजान्वयाये च समुत्थिताः ॥ १५
वलभी गृहराजश्च शालागृहं च मन्दिरम् । विशालश्चमसो ब्रह्ममन्दिरं भुवनं तथा ॥ १६
प्रभवः शिबिका वेश्म नवैते पुष्पकोद्भवाः । वलयो दुन्दुभिः पद्मो महापद्मक एव च ॥ १७
वर्धनी वान्य उष्णीषः शङ्खश्च कलशस्तथा । स्वक्षश्च तथाऽप्येते वृत्ताः कैलाससंभवाः ॥ १८
गजोऽथ वृषभो हंसो गरुत्मानृक्षनायकः । भूषणो भूधरश्चान्यः श्रीजयः पृथिवीजरः ॥ १९
वृत्तायतात्समुद्भूता नवैते मणिकाह्वयात् । वज्रं चक्रं तथा चान्यत्स्वस्तिकं वज्रस्वस्तिकम् ॥२०
+चित्रं स्वस्तिकखड्गं च गदा श्रीकण्ठ एव च । विजयो नामतश्चैते त्रिविष्टपसमुद्भवाः ॥ २१
नगराणामिमाः संज्ञा लाटादीनामिमास्तथा । ग्रीवार्धेनोन्नतं चूलं पृथुलं स्यात्त्रिभागतः ॥ २२

---

* इदमर्धं ख. ग. पुस्तकयोर्नास्ति । + इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ ख ग. 'ध्मानस्य ल' । २ घ. 'ते क्षेत्रेऽन्त्यभागे । ३ क. ङ. च. 'ध्यमो गर्भो ह्येष भा' । ख. ग. 'ध्यमे गर्भो ज्ये' । ४ घ. 'त्यन्यसा ग' । ५ क. ङ. च. 'न्याशा म' । ६ क ङ. च. अर्धार्धे' । ७ ख. ग. 'चित्कचित् । ८ ख. ग. घ. 'ढिता यदि, कु' । ९ ख. 'दिक्षु वा' । १० घ. वा नं वा । आ' । ११ ■ ङ. च. 'या विप्रे स' । ख. ग. 'ब त्वेष्ठे स' । १२ ख. 'मरस्त' । १३ क. घ. ङ. च. 'एवं च प' । १४ ख. ग. नन्दनो । घ नन्दिको । १५ ख. 'ता । वलभागृह' । १६ घ, ङ. 'धा युग्मो म' । १७ क. ङ. च. न । पत्ताली वान्यदुच्चश्च शङ्कुगाश्च क' । ख. ग. न । वर्धनी वा वयश्चैतः शृङ्गाश्च क' । १८ ख. ग. 'भ्रहस्तक' । ' ख. ग. 'ग् । चमस' । २० क. ङ. घ. चूर्णं । २१ घ. 'ते च दि' । घ. 'ते च विभा' ।

दशधा वेदिकां कृत्वा पञ्चभिः स्कन्द विस्तरः । त्रिभिः कण्ठं तु कर्तव्यं चतुर्भिस्तु प्रचण्डकम्॥
दिक्षु द्वाराणि कार्याणि न विदिक्षु कदाचन । पिण्डिका कोणविस्तीर्णा मध्यमान्ता शुभावहा॥
क्वचित्पञ्चमभागेन महतां गर्भपादतः । उच्छ्रायो द्विगुणस्तेषामन्यथा वा निगद्यते ॥ २५
पद्माऽधिकात्समारभ्य अङ्गुलानां शतादिह । उत्तमान्यपि चत्वारि द्वाराणि दशहानितः २६
त्रीण्येव मध्यमानि स्युस्त्रीण्येव कन्यसान्यथः । उच्छ्रायार्धेन विस्तारो ह्युच्छ्रायो धिकस्त्रिया॥
चतुर्भिरष्टभिर्वाऽपि दशभिर्वाऽङ्गुलैः शुभः । उच्छ्रायात्पादविस्तीर्णाः शाखास्वेदुदुम्बरौ(रे)॥
विस्तारार्धेन बाहुल्यं सर्वेषामेव कीर्तितम् । त्रिपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदम् ॥ २९
अधःशाखाचतुर्थांशे प्रतीहारौ निवेशयेत् । मिथुनैः पादवर्णाभिः शाखाशेषं विभूषयेत् ॥ ३०
स्तम्भविद्धे भृत्यता स्याद्वृक्षविद्धे त्वभूतिता । कूपविद्धे भयं द्वारे क्षेत्रविद्धे धनक्षयः ॥ ३१
प्रासादगृहशालादिमार्गविद्धेषु बन्धनम् । सभाविद्धेन दारिद्र्यं वर्णविद्धे निराकृतिः ॥ ३२
उलूखलेन दारिद्र्यं शिलाविद्धेन शत्रुता । छायाविद्धेन दारिद्र्यं वेधदोषो न जायते ॥ ३३
छेदादुत्पाटनाद्वाऽपि तथा प्राकारलक्षणात् । सीमाया द्विगुणत्यागाद्वेधदोषो न जायते ॥ ३४

इत्यादिमहापुराणे आग्नेये सामान्यप्रासादलक्षणं नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३५६

---

अथ पञ्चाधिकशततमोऽध्यायः ।

---

गृहादिवास्तुकथनम् ।

ईश्वर उवाच—
नगरग्रामदुर्गादौ गृहप्रासादवृद्धये । एकाशीतिपदैर्वास्तुं पूजयेत्सिद्धये ध्रुवम् ॥ १
प्रागास्या दशधा नाड्यस्तासां नामानि च ब्रुवे । शान्ता यशोवती कान्ता विशाला प्राणवाहिनी
सती वसुमती नन्दा सुभद्राऽथ मनोरमा । उत्तरास्या दशान्याश्च एकाशीतिपदस्त्रिकारिका ॥ ३
हरिणी सुप्रभा लक्ष्मीर्विभूतिर्विमला प्रिया । जया ज्वाला विशोका च स्मृतास्ताः सूत्रपाततः॥४
ईशाद्यष्टाष्टकं दिक्षु यजेदीशं धनंजयम् । शक्रमर्कं तथा सत्यं भृशं व्योम च पूर्वतः ॥ ५
हव्यवाहं च पूषाणं वितथं सोममेव च । कृतान्तमथ गन्धर्वं भृशं मृगं च दक्षिणे ॥ ६
पितरं द्वारपालं च सुग्रीवं पुष्पदन्तकम् । वरुणं दैत्यशेषं च यक्ष्माणं पश्चिमे सदा ॥ ७
रोगाहिमुख्यो भल्लाटः सोमाख्यमदितिर्दितिः । नवैर्न्तैःपदगो ब्रह्मा पूज्योऽर्धे च पदस्त्रिगाः॥८
ब्रह्मेशान्तरकोष्ठस्थमापाख्यं तु पदद्वये । तदधश्चापवत्साख्यं केन्द्रान्तरेषु पदद्वे ॥ ९

---

१ ख. ग. तदन्तकम् । २ ख. महती । ३ घ. उच्छ्रायो । ४ क. ङ. च. कन्यसान्य° । ख. ग. कन्यसान्य° ।
५ घ. °च्छ्रायोऽन्वधि° । ६ ख ग. °कलश । च° । ७ क ङ. च. °दुम्बरौ । उ° । ८ ग. °र्णानां विशा° । ९ घ. °स्सप्तद्वारे । वि° । १० घ. °न् । द्वि° । ११ क. ङ. च. °ष्टुन् । १२ ख ग. °शेषेश्च ग° । १३ ख. ग. °मार्गेण ।
१४ ख. घ. °च कुर्यात्° । १५ क. ङ. च. °विद्धश्चभूतता । ख. °विद्धश्चभूतता । १६ क. ख. ङ च. °संज्ञा पू° ।
१७ घ. °दैर्वस्तु । १८ क. ङ. च °शान्तु पू° । १९ क. घ. ङ. च. °पा द्वाद° । २० क. ङ. च. °न्यत्रिधिकाङ्केषु ।
२१ घ. °शालन्ब्र° । २२ घ. भृश । २३ क. ङ. च. °नन्दा° । २४ ख ग. °न्य पाद° । २५ घ. °रश्चा तु ।

क्ष क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरास्तथा ॥ २
च्छान्तमयः शिशिरः सुखोदय इतः परः । आनन्दश्च शिवः क्षेमो ध्रुवस्तन्नाम वर्षकम् ॥ ३
दाशैलो गोमेधश्चन्द्रो नारदडुन्दुभी । सोमकः सुमनाः शैलो वैभ्राजास्तज्जनाः शुभाः ॥ ४
ः प्रधानाः सप्तात्र प्लक्षाच्छाकान्तिकेषु च । जीवनं पञ्चसाहस्रं धर्मो वर्णाश्रमात्मकः ॥ ५
र्पकाः कुरवश्चैव विपिंशा भाविनश्च ते । विपाशास्तैश्च सोमोऽर्च्यो द्विलक्षश्चैव प्लक्षकः ॥ ६
नेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः । वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाऽभवन् ॥ ७
तोऽथ हरितश्चैव जीमूतो लोहितः क्रमात् । वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥ ८
गुणो द्विगुणेनैव सुरोदेन समावृतः । कुमुदश्चानलश्चैव तृतीयस्तु वलाहकः ॥ ९
गः कङ्कोऽथ महिषः ककुद्मान्सप्त निम्नगाः । कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः
युरूपं यजन्ति स्म सुरोदेनाथमावृतः । ज्योतिष्मतः कुशेशाः स्युरुद्भिदो वेणुमान्सुतः ॥ ११
धी लम्बनी धैर्यः कपिलश्च प्रभाकरः । विप्राद्या दधिमुख्यास्तु ब्रह्मरूपं यजन्ति ते ॥ १२
द्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा । कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः ॥ १३
वृतोऽप्यं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ । क्रौञ्चेश्वरा द्युतिमतः पुत्रास्तन्नामवर्षकाः ॥ १४
कुशलो मनोनुगश्चोष्णः प्रधानोऽथान्धकारकः । मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः)
श्च वामनश्चैव तृतीयश्चान्धकारकः । देवावृत्पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः ॥ १६
रा द्वीपेषु ये शैला यथा द्वीपानि ते तथा । पुष्कराः पुष्कला धन्यास्तिष्या विप्राद्यो हरिम्
जन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः । संवृतः शाकद्वीपेन भव्याच्छाकेश्वराः सुताः ॥ १८
र्दश्च कुमारश्च सुकुमारो मणीचकः । कुसुमोत्तरो (रोऽप) मोदाकी द्रुमस्तन्नामवर्षकाः ॥१९
याख्यो जलधरो रैवतः श्यामकोदकौ । आम्बिकेयस्तथा रम्यः केसरी सप्त निम्नगाः ॥२०
॥ मगधमानस्यामन्दगाश्च द्विजातयः । यजन्ति सूर्यरूपं तु शाकः क्षीराब्धिनाऽऽवृतः ॥ २१
करेणाऽऽवृतः सोऽपि द्वौ पुत्रौ सवनस्य च । महावीतो धातकिश्च वर्षे द्वे नामचिह्निते ॥ २२
ौऽद्रिर्मानसाख्योऽत्र मध्यतो वलयाकृतिः । योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥
वने दशसाहस्रं सुरैर्ब्रह्माऽत्र पूज्यते । स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः २४
नातिरिक्तता चापां समुद्रेषु न जायते । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ २५
ोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ २६

---

* क. ख. पुस्तकयोर्नास्ति धनुश्चिह्नान्तर्गतो ग्रन्थः ।

---

१ क. ग. °मेदश्च° । २ घ. °स्तथन्नाः । ३ क. विपिंशा । ख. विदिशो । ४ ख. भाविनिश्चिते । ५ घ. ङ. °श्वरा-
लश्च° । ६ ख. भजन्ति । ७ ख. °देन तस्य° । ८ घ. ङ. °वृद्धिनो वेणुना° । ९ क. द्विरथो । १० घ. ङ. दधिनु° ।
घ. ग. °धो नुमदयो° । ख. °दोमनु° । १२ ख. घ. ख. °ष्यः पीतोपदान्य° । १३ क. ख. °पुत्र वि° । १४ क.
°प्रराशत्या विष्णो । घ. °प्रतानत्या विष्णो । १५ घ. ङ. °न्यास्तीर्या वि° । १६ ख. ग. °तिष्या वि° । १७ घ.
°व दृष्ट्वा° । १८ ख. °तन्नश्च । १९ घ. ङ. °मोदकः । २० क. ख. कुसुमोत्तरः सम्मोदकर्कद्रुम° । घ. ग. कुसुमोत्तर
मोदाकिद्रुम° । २१ क. °मकोदको । २२ ख. ग. °मोदकी ।

( महाद्वीपादिवर्णनम् )

विष्ट्य क्षारसुदधिं प्लक्षद्वीपस्तथा स्थितः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरास्तथा ॥ २
स्याच्छान्तभयः शिशिरः सुखोदय इतः परः । आनन्दश्च शिवः क्षेमो ध्रुवस्तन्नाम वर्षकम् ॥३
र्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी । सोमकः सुमनाः शैलो वैभ्राजास्तज्जनाः शुभाः ॥ ४
द्यः प्रधानाः सप्तात्र प्लक्षाच्छाकान्तिकेषु च । जीवनं पञ्चसाहस्रं धर्मो वर्णाश्रमात्मकः ॥ ५
आर्यकाः कुरवश्चैव विविंशा भाविनश्च ते । विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चैव प्लक्षकः ॥ ६
ग्नेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः । वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाऽभवन् ॥
श्वेतोऽथ हरितश्चैव जीमूतो लोहितः क्रमात् । वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥ ८
द्विगुणो द्विगुणेनैव सुरोदेन समावृतः । कुमुदश्चानलश्चैव तृतीयस्तु वलाहकः ॥ ९
द्रोणः कङ्कोऽथ महिषः ककुद्मान्सप्त निम्नगाः । कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः
वायुरूपं यजन्ति स्म सुरोदेनायमावृतः । ज्योतिष्मतः कुशेशाः स्युरुद्भिदो वेणुमान्सुतः ॥ ११
रथी लम्बनी धैर्यः कपिलश्च प्रभाकरः । विप्राद्या दधिमुख्यास्तु ब्रह्मरूपं यजन्ति ते ॥ १२
विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा । कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः ॥ १३
वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ । क्रौञ्चेश्वरा द्युतिमतः पुत्रास्तन्नामवर्षकाः ॥ १४
(*कुशलो मनोनुगश्चोष्णः प्रधानोऽथान्धकारकः । मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः)
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । देवावृत्पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः ॥ १६
द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा । पुष्कराः पुष्कला धन्यास्तिष्याः विप्रादयो हरिम्
यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः । संवृतः शाकद्वीपेन भव्याच्छाकेश्वराः सुताः ॥ १८
जलदश्च कुमारश्च सुकुमारो मणीचकः । कुसुमोत्तरश्चो (रोऽथ) मोदाकी द्रुमस्तन्नामवर्षकाः ॥१९
उदयाख्यो जलधरो रैवतः श्यामकोद्रकौ । आम्बिकेयस्तथा रम्यः केसरी सप्त निम्नगाः ॥२०
मगा मगधमानस्यामन्दगाश्च द्विजातयः । यजन्ति सूर्यरूपं तु शाकः क्षीराब्धिनाऽऽवृतः ॥ २१
पुष्करेणाऽऽवृतः सोऽपि द्वौ पुत्रौ सवनस्य च । महावीतो धातकिश्च वर्षे द्वे नामचिह्निते ॥ २२
एकोऽद्रिर्मानसाख्योऽत्र मध्यतो वलयाकृतिः । योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥
जीवनं दशसाहस्रं सुरैर्ब्रह्माऽत्र पूज्यते । स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः २४
ऊनातिरिक्तता चापां समुद्रेषु न जायते । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ २५
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ २६

* क. ङ. पुस्तकयोर्नास्ति धनुश्चिह्नान्तर्गतो ग्रन्थः ।

१ क. ग. °मेदश्च° । २ घ. °स्तज्जनाः । ३ क. विविंश । ख. विविंशो । ४ ख. आदिनिधिते । ५ घ. ङ. °क्षेत्रा- निपलक्ष° । ६ ख. भजन्ति । ७ ख. °देन सम्य° । ८ घ. ङ. °दद्विजो वेणुमा° । ९ क. द्वैरथो । १० घ. ङ. दधिनु° । ११ ख. ङ. °लो मुनश्चोष्णं° । ख. °श्चैवानु° । १२ ख. घ. ख. °ष्यः प्रधानोऽप्यन्ध° । १३ क. ङ. °दुन्दु मि° । १४ क. ङ. °ष्करावर्ता विप्रा । ख. °ष्करावर्ता विप्रा । १५ घ. ङ. °न्याख्तीयां वि° । १६ ख. ग. °तिष्या वि° । १७ घ. ङ. °न इन्द्रा° । १८ ख. °लजम । १९ घ. ङ. °वीचकः । २० क. ङ. कुसुमोत्तर मयोदाकिर्द्रुम° । घ. ग. कुसुमोत्तर मयोदाकिर्द्रुम° । २१ क. °रकेद्रवौ । २२ ख. घ. °योद्भवे ।

[2]तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत॥
श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद्ब्रह्मलोकदम्। श्राद्धं कुर्याच्च पुत्रादिः पितुर्जीवति तत्पितुः
तत्पितुस्तत्पितुः कुर्याज्जीवति प्रपितामहे। पितुः पितामहस्याथ परस्य प्रपितामहात्॥
एवं मात्रादिकस्यापि तथा मातामहादिके। श्राद्धकल्पं पठेद्यस्तु स लभेच्छ्राद्धकृत्फलम्॥
तीर्थे युगादौ मन्वादौ श्राद्धं दत्तमथाक्षयम्। आश्वयुक्शुक्लनवमी द्वादशी कार्तिके तथा॥
तृतीया चैव माघस्य तथा भाद्रपदस्य च। फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा॥
आषाढस्यापि दशमी माघमासस्य सप्तमी। श्रावणे चाष्टमी कृष्णा तथाऽऽषाढे च पूर्णिम
कार्तिकी फाल्गुनी तद्वज्ज्यैष्ठे पञ्चदशी सिता। स्वायंभुवाद्या मनवस्तेषामाद्याः किलाक्षया
गया प्रयागो गङ्गा च कुरुक्षेत्रं च नर्मदा। श्रीपर्वतः प्रभासश्च शालग्रामो वराणसी॥
गोदावरी तेषु श्राद्धं श्रीपुरुषोत्तमादिषु॥

इत्यादिमहापुराण आग्नेये श्राद्धकल्पवर्णनं नाम सप्तदशाधिकशततमोऽध्यायः॥ ११७॥

आदितः श्लोकानां समष्ट्यङ्काः—३७५२

---

अथाष्टादशाधिकशततमोऽध्यायः।

---

भारतवर्षवर्णनम्।

अग्निरुवाच—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद्भारतं नाम नवसाहस्रविस्तृतम्॥
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्। महेन्द्रो मलयः सह्यः शुक्तिमानृक्ष(गिरी)पर्वतः॥
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः। इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान्॥
नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः। अयं तु नवमस्तेषां द्वीपः सागरसंवृतः॥
योजनानां सहस्राणि द्वीपोऽयं दक्षिणोत्तरात्। नव भेदा भारतस्य मध्यभेदेऽथ पूर्वतः॥
किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः। वेदस्मृतिमुखा नद्यः पारियात्रोद्भवास्तथा॥
विन्ध्याच्च नर्मदाद्याः स्युः सह्यात्तापी पयोष्णिका। गोदावरी भीमरथी कृष्णवेणादिकास्तथा
मलयात्कृतमालाद्यास्त्रिसामाद्या महेन्द्रजाः। कुमाराद्याः शुक्तिमतो हिमाद्रेश्चन्द्रभागका॥
पश्चिमे कुरुपाञ्चालमध्यदेशादयः स्थिताः॥

इत्यादिमहापुराण आग्नेये भारतवर्षवर्णनं नामाष्टादशाधिकशततमोऽध्यायः॥ ११८॥

आदितः श्लोकानां समष्ट्यङ्काः—३७६०

---

अथैकोनविंशत्यधिकशततमोऽध्यायः।

---

महाद्वीपादिवर्णनम्।

अग्निरुवाच—

लक्षयोजनविस्तारं जम्बूद्वीपं समावृतम्। लक्षयोजनमानेन क्षारोदेन समन्ततः॥

---

१ घ. ङ. वर्ज्यमा'। २ घ. तथा। ३ क. ङ. ज. 'मानृक्ष'। ४ क. ग. 'श्चो गन्ध'। ५ घ. ङ. क्षीरोदेन

संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरास्तथा ॥ २
स्याच्छान्तभयः शिशिरः सुखोदय इतः परः । आनन्दश्च शिवः क्षेमो ध्रुवस्तन्नाम वर्षकम् ॥३
मर्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी । सोमकः सुमनाः शैलो वैभ्राजास्तज्जनाः शुभाः ॥ ४
नद्यः प्रधानाः सप्तात्र प्लक्षाच्छाकान्तिकेषु च । जीवनं पञ्चसाहस्रं धर्मो वर्णाश्रमात्मकः ॥ ५
आर्यकाः कुरवश्चैव विविंशा भाविनश्च ते । विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चैव प्लक्षकः ॥ ६
मानेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः । वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाऽभवन् ॥ ७
श्वेतोऽथ हरितश्चैव जीमूतो लोहितः क्रमात् । वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥ ८
द्विगुणो द्विगुणेनैव सुरोदेन समावृतः । कुमुदश्चानलश्चैव तृतीयस्तु बलाहकः ॥ ९
द्रोणः कङ्कोऽथ महिषः ककुद्मान्सप्त निम्नगाः । कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः
वायुरूपं यजन्ति स्म सुरोदेनायमावृतः । ज्योतिष्मतः कुशेशाः स्युरुद्भिदो वेणुमान्सुतः ॥ ११
द्वैरथी लम्बनो धैर्यः कपिलश्च प्रभाकरः । विप्राद्या दधिमुख्यास्तु ब्रह्मरूपं यजन्ति ते ॥ १२
विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा । कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः ॥ १३
वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ । क्रौञ्चेश्वरा द्युतिमतः पुत्रास्तन्नामवर्षकाः ॥ १४
(*कुशलो मनोनुगश्चोष्णः प्रधानोऽथान्धकारकः । मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः)
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । देवावृत्पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः ॥ १६
द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा । पुष्कराः पुष्कला धन्यास्तिष्या विप्राद्यो हरिम्
यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः । संवृतः शाकद्वीपेन भव्याच्छाकेश्वराः सुताः ॥ १८
जलदश्च कुमारश्च सुकुमारो मणीचकः । कुसुमोत्तरथो (सोऽथ) मोदाकी द्रुमस्तन्नामवर्षकाः ॥१९
उदयाख्यो जलधरो रैवतः श्यामकोद्रकौ । आम्बिकेयस्तथा रम्यः केसरी सप्त निम्नगाः ॥२०
मगा मगधमानस्यामन्दगाश्च द्विजातयः । यजन्ति सूर्यरूपं तु शाकः क्षीराब्धिनाऽऽवृतः ॥ २१
पुष्करेणाऽऽवृतः सोऽपि द्वौ पुत्रौ सवनस्य च । महावीतो धातकिश्च वर्षे द्वे नामचिह्निते ॥ २२
एकोऽद्रिर्मानसाख्योऽत्र मध्यतो वलयाकृतिः । योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥
जीवनं दशसाहस्रं सुरैर्ब्रह्माऽत्र पूज्यते । स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः २४
ऊनातिरिक्तता चापां समुद्रेषु न जायते । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ २५
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ २६

* क. ख. पुस्तकयोर्नास्ति धनुश्चिह्नान्तर्गतो ग्रन्थः ।

१ क. ग. 'मेधय' । २ घ. 'स्तज्जनाः । ३ क. विविंशा । च. विदिशो । ४ च. भाविनिश्चिते । ५ घ. ङ. 'क्षणा-च्छिखश्च' । ६ च. भजन्ति । ७ च. 'देन समा' । ८ घ. ङ. 'रुद्भिदो वेणुना' । ९ क. द्वैरथो । १० घ. ङ. दधिमु' । ११ ख. ग. 'लो मुमर्थ्यो' । च. 'स्तेमानु' । १२ ख. ग. च. 'ध्यः पीवरोऽप्यन्य' । १३ क. ङ. 'पुष्प मि' । १४ ङ. ङ. 'कारनस्यो विप्रा' । घ. 'कारनस्या विप्राः' । १५ घ. ङ. 'न्यास्तीर्था वि' । १६ ख. ग. 'तिष्या वि' । १७ घ. ङ. 'न दृष्या' । १८ च. 'लञ्चश्च' । १९ घ. ङ. 'मोदकः' । २० क. ख. कुसुमोत्तरः शर्माद्यकिंद्रुम' । ख. ग. कुसुमोत्तरः शर्माद्यकिंद्रुम' । २१ च. 'ष्णैरुता' । २२ ख. घ. 'धौतकौ' ।

स्वादूदकात्तु द्विगुणा भूर्हैमी जन्तुवर्जिता । लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥
लोकालोकस्तु तमसाऽऽवृतोऽथाण्डकटाहतः । भूमिः साऽण्डकटाहेन पञ्चाशत्कोटिविस्तरा ॥

इत्याग्नेये महापुराणे महाद्वीपादिवर्णनं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७८८

---

अथ विंशत्यधिकशततमोऽध्यायः ।

---

भुवनकोशवर्णनम् ।

अग्निरुवाच—

विस्तारस्तु स्मृतो भूमेः सहस्राणि च सप्ततिः । उच्छ्रायो दशसाहस्रं पातालं चैकमेककम् ॥
अतलं वितलं चैव नितलं च गभस्तिमत् । महाख्यं सुतलं चाग्र्यं पातालं चापि सप्तमम् ॥
कृष्णपीतारुणाः शुक्लशर्कराः शैलकाञ्चनाः । भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखम् ॥
पातालानामधश्चाऽऽस्ते शेषो विष्णुश्च तामसः । गुणानन्त्यात्स चानन्तः शिरसा धारयन्म
*भुवोऽधो नरका नैके न पतेत्तत्र वैष्णवः । रविणा भासिता पृथ्वी यावत्तावन्नभो मतम् ।
भूमेर्योजनलक्षं तु वसिष्ठ रविमण्डलम् । रवेर्लक्षेण चन्द्रश्च लक्षान्नाक्षत्रमिन्दुतः ॥
द्विलक्षाद्भाद्बुधश्चाऽऽस्ते बुधाच्छुक्रो द्विलक्षतः । द्विलक्षेण कुजः शुक्राद्भौमाद्द्विलक्षतो गुरु
गुरोर्द्विलक्षतः सौरिर्लक्षात्सप्तर्षयः शनेः । लक्षाद्ध्रुवो ह्यृषिभ्यस्तु त्रैलोक्यं चोच्छ्रयेण च
ध्रुवात्कोट्या महर्लोको यत्र ते कल्पवासिनः । जनो द्विकोटितस्तस्माद्यत्राऽऽसन्सनकादयः
जनात्तपश्चाष्टकोट्या वैराजा यत्र देवताः । षण्णवत्या तु कोटीनां तपसः सत्यलोककः ॥
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः । पादगम्यस्तु भूर्लोको भुवः सूर्यान्तरः स्मृतः ।
स्वर्गलोको ध्रुवान्तस्तु नियुतानि चतुर्दश । एतदण्डकटाहेन वृतो ब्रह्माण्डविस्तरः ॥
वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः । वृतं दशगुणैरण्डं भूतादिर्महता तथा ॥
दशोत्तराणि शेषाणि एकैकस्मान्महामुने । महान्तं च समावृत्य प्रधानं समवस्थितम् ॥
अनन्तस्य न तस्यान्तः संख्यानं नापि विद्यते । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥
असंख्यातानि चाण्डानि तत्र जातानि चेदृशाम् । दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानिति
प्रधाने च स्थितो व्यापी चेतनात्माऽऽत्मवेदनः । प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ॥
विष्णुशक्त्या महाप्राज्ञ वृतौ संश्रयधर्मिणौ । तयोः सैव पृथग्भावे कारणं संश्रयस्य च ॥
क्षोभकारणभूता च सर्गकाले महामुने । यथा शैत्यं जले वातो बिभर्ति कणिकागतम् ॥
जगच्छक्तिस्तथा विष्णोः प्रधानप्रतिपादिकाम् । विष्णुशक्तिं समासाद्य देवाद्याः संभवन्ति
स च विष्णुः स्वयं ब्रह्म यतः सर्वमिदं जगत् । योजनानां सहस्राणि भास्करस्य रथो नव

---

* इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

---

१ घ. छ. 'दशा बहम्' । २ ख ग. त्रिगुणा । ३ क. ङ. घ. भुवो । ४ घ. छ. 'लोकयाद्योच्छ्' । ५ क. ङ. ख. 'न नैव वि' । ७ क. ङ. ख. 'दयाः । द्वा' । ८ क. 'पी तपात्मा सुप्रदे' । ९ २ ' । १० ख. छ. ग. ङ. घ. 'पादधम्' । ११ क. ङ. न प्रदत्त ।

[ई]शादण्डस्तथैवास्य द्विगुणो मुनिसत्तम । सार्धकोटिस्तथा सप्त नियुतान्यधिकानि वै ॥ २२
योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् । त्रिनाभिमतिपञ्चारं(?) षण्नेमि द्व्ययनात्मकम् २३
संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् । चत्वारिंशत्सहस्राणि द्वितीयाक्षो विवस्वतः ॥ २४
पञ्चान्यानि तु सार्धानि स्यन्दनस्य महामते । अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्धयोः ॥ २५
ह्रस्वोऽक्षस्तद्युगार्धं च ध्रुवाधारं रथस्य वै । हयाश्च सप्त च्छन्दांसि गायत्र्यादीनि सुव्रत ॥ २६
उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः । यावन्मात्रप्रदेशे तु वसिष्ठाद्यवस्थितो ध्रुवः ॥ २७
स्वयमायाति तावत्तु भूमेराभूतसंप्लवम् । ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ॥ २८
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् । निर्धूतदोषपङ्कानां(णां) यतीनां स्थानमुत्तमम् ॥
ततो गङ्गा प्रभवति स्मरणात्पापनाशनी । दिवि रूपं हरेर्ज्ञेयं शिशुमाराकृति प्रभोः ॥ ३०
स्थितः पुच्छे ध्रुवस्तत्र भ्रमन्भ्रामयति ग्रहान् । (*स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिर्वरैः ३१
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः । ) हिमोष्णवारिवर्षाणां कारणं भगवान्रविः ॥ ३२
ऋग्वेदादिमयो विष्णुः स शुभाशुभकारणम् । रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ३३
वामदक्षिणतो युक्ता दश तेन चरत्यसौ । त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥ ३४
त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदाकरम् । एकां कलां च पितर एकामाराशिसंस्थिताः ॥३५
वाय्वग्निद्रव्यसंभूतो रथश्चन्द्रसुतस्य च । अष्टाभिस्तुरगैर्युक्तो बुधस्तेन चरत्यपि ॥ ३६
शुक्रस्यापि रथोऽष्टाश्वो भौमस्यापि रथस्तथा । बृहस्पते रथोऽष्टाश्वः शनेश्चाष्टाश्वको रथः ॥३७
स्वर्भानोश्च रथोऽष्टाश्वः केतोश्चाष्टाश्वको रथः । यद्द्य वैष्णवः कायस्ततो विप्र वसुंधरा ॥ ३८
पद्माकारा समुद्भूता पर्वताद्यादिसंयुता । ज्योतिर्भुवननद्यद्रिसमुद्रवनकं हरिः ॥ ३९
यदस्ति नास्ति तद्विष्णुर्विष्णुज्ञानविजृम्भितम् । न विज्ञानमृते किंचिज्ज्ञानं विष्णुः परं पदम् ॥
तत्कुर्याद्येन विष्णुः स्यात्सत्यं ज्ञानमनन्तकम् । पठेद्भुवनकोशं हि यः सोऽवाप्तसुखात्मभाक् ४०
ज्योतिःशास्त्रादिविद्याश्च शुभाशुभाधिपो हरिः ॥ ४२

इत्यादिमहापुराण आग्नेये भुवनकोशवर्णनं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

आदितः श्लोकानां समष्ट्यङ्काः—६८३०

---

अथैकविंशत्यधिकशततमोऽध्यायः ।

---

ज्योतिःशास्त्रकथनम् ।

अग्निरुवाच—
ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदम् । चातुर्लक्षस्य सारं यत्तज्ज्ञात्वा सर्वविद्भवेत् ॥ १
षडष्टके विवाहो न न च द्विर्द्वादशे स्त्रियाः । न त्रिकोणे ह्यथ प्रीतिः शेषे च समसप्तके ॥ २

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. पुस्तकयोः ।

१ क. ■ 'मिन्यक्षयार्धके । स' । ख. घ. 'मिय्यक्षयात्मके । स' । २ क. ङ. च. 'तो बुधः । स्वय' । ३ ख. ग. घ. छ. 'प्लवे । ऊ' । ४ च. 'ति सर्वपापप्रणाश' । ५ ख. ग. घ. छ. प्रभो । ६ च. 'तो देवैरा' । ७ च. 'भिर्वरैः । ग' । ८ घ. 'दावर' । ९ ख. ग. 'यः । एतादि वै' । १० ख. 'शुभाधिपो ह' । ११ घ. ङ. षट्टके । १२ घ ङ. द्विद्वाद' ।

द्विर्द्वादशे त्रिकोणे च मैत्री क्षेत्रपयोर्यदि । भवेदेकाधिपत्यं च ताराप्रीतिरथापि वा ॥ ३
तथाऽपि कार्यः संयोगो न तु षट्काष्टके पुनः । जीवे भृगौ चास्तमिते म्रियते च पुमान्स्त्रियाः॥
गुरुक्षेत्रगते सूर्ये सूर्यक्षेत्रगते गुरौ । विवाहं न प्रशंसन्ति कन्यावैधव्यकृद्भवेत् ॥ ५
अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयम् । व्रतोद्वाहौ न कुर्वीत गुरोर्वक्रा(र्वत्रया)तिचारयोः ॥६
चैत्रे पौषे न रिक्तासु हरौ सुप्ते कुजे रवौ । चन्द्रक्षये चाशुभं स्यात्संध्याकालः शुभावहः ॥ ७
रोहिणी चोत्तरा मूलं स्वाती हस्तोऽथ रेवती । तुले च मिथुने शस्तो विवाहः परिकीर्तितः ॥८
विवाहे कर्णवेधे च व्रते पुंसवने तथा । प्राशने चाऽऽद्यचूडायां विद्धर्क्षं च विवर्जयेत् ॥ ९
श्रवणे मूलपुष्ये च सूर्यमङ्गलजीवके । कुम्भे सिंहे च मिथुने कार्यं पुंसवनं स्मृतम् ॥ १०
हस्ते मूले मृगे पौष्णे बुधे शुक्रे च निष्कृतिः । अर्केन्दुजीवभृगुजे मूले ताम्बूलभक्षणम् ॥ ११
अन्नस्य प्राशनं शुक्रे जीवे मृगे च मीनके । हस्तादिपञ्चके पुष्ये कृत्तिकादित्रये तथा ॥ १२
अश्विन्यामथ रेवत्यां नवान्नफलभक्षणम् । पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनी॥ १३
स्वातिसौम्ये च भैषज्यं कुर्यादन्यत्र वर्जयेत् । पूर्वात्रयं मघा याम्यं पावनं श्रवणत्रयम् ॥ १४
भौमादित्यशनेर्वारे स्नातव्यं रोगमुक्तितः । पार्थिवे चाष्टहींकारं मध्ये नाम च दिक्षु च ॥ १५
हींपुटं पार्थिवे दिक्षु हीं विदिक्षु लिखेद्बहून् । गोरोचनाकुङ्कुमेन भूर्जे बद्धे गले धृतम् ॥ १६
शत्रवो वशमायान्ति मन्त्रेणानेन निश्चितम् । श्रीं ह्रीं संपुटं नाम श्रीं ह्रीं[च] पत्राष्टके क्रमात्॥
गोरोचनाकुङ्कुमेन(*भूर्जेऽथ सुभगाहृते । गोमध्येवाशमः पत्रे हरिद्रायाः रसेन च ॥ १८
शिलापट्टेऽरीन्स्तम्भयति भूमावधोमुखीकृतम् । ॐ ह्रूं सः संपुटं नाम ओं ह्रूं सः पत्राष्टके क्रमात्
गोरोचनाकुङ्कुमेन) भूर्जे मृत्युनिवारणम् । एकपञ्चनव प्रीत्यै द्विषड्द्वादश पोगकाः ॥ २०
त्रिसप्तैकादशे लाभो वेदाष्टद्वादशे रिपुः । तनुर्धनं च सहजः सुहृत्सुतौ रिपुस्तथा ॥ २१
जाया निधनधर्मौ च कर्माऽऽयव्ययकं क्रमात् । स्फुटं मेषादिलग्नेषु नवताराबलं वदेत् ॥ २२
जन्म संपद्विपत्क्षेमं प्रत्यरिः साधकः क्रमात् । निधनं मित्रपरममित्रं ताराबलं विदुः ॥ २३
वारे भृगुबुधशुक्राणां सूर्याचन्द्रमसोस्तथा । माघादिमासषट्के तु क्षौरमाद्यं प्रशस्यते ॥ २४
कर्णवेधो बुधे जीवे पुष्ये श्रवणचित्रयोः । पञ्चमेऽब्दे चाध्ययनं षष्ठीप्रतिपदं त्यजेत् ॥ २५
रिक्तां पञ्चदशीं भौमं प्राच्यं वाणीं हरिं श्रियम् । माघादिमासषट्के तु मेखलाबन्धनं शुभम्२६
चूडाकरणमाद्यं च श्रावणादौ न शस्यते । अस्तं याते गुरौ शुक्रे क्षीणे च शशलाञ्छने ॥ २७
उपनीतस्य विप्रस्य मृत्युं जाड्यं विनिर्दिशेत् । क्षौरर्क्षे शुभवारे च समावर्तनमिष्यते ॥ २८
शुभक्षेत्रे विलग्नेषु शुभयुक्तेक्षितेषु च । अश्विनीमघाचित्रासु स्वातीयाम्योत्तरासु च ॥ २९

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति च. पुस्तके ।

१ ग. [illegible]. °न्स्त्रिया । गु° । २ ख. ग. तु । ३ घ. ङ. रक्तासु । ४ ख. ग. तु । घ. ङ. न । ५ क. ख. ग. °ष्ट्द्द्वाद विद्धं° । ६ क. ङ. च. °विदः । पा° । ७ क. ङ. ष. °पुटे पा° । ८ क. ख. ग. ङ. °धु विदिशु ह्रीं लि° । ९ ग. ङ. च. गर्दंपृ° । १० क. ङ. °र्जेऽथासुनयोष्ट्रे । ११ क ङ. °ध्वराप्रम. प° । १२ क. ङ. च । ॐ । १३ क. °म् । मं नों घः ग । १४ ख. ग. ॐ हूं सः । १५ क. °म श्रीम्, ॐ सं जुसः । ङ. °म श्रीम्, ॐ जुसः । १६ घ. ङ. च. । १७ क. ङ. स्वधः । ङ. संवरा. । घ. देपकः । १८ क. °ष्टे आवप(क)जे प° । ङ. °ष्टे आध्यात्मे प° । °श्यस्य ।

( ज्योतिःशास्त्रकथनम् )

ुनर्वसौ तथा पुष्ये धनुर्वेदः प्रशस्यते । भरण्यार्द्रा मघाऽश्लेषा वह्निभगर्क्षयोस्तथा ॥ ३०
जेर्ज्यिविपुर्न कुर्वीत यस्त्वमावरणं नरः । गुरौ शुक्रे बुधे वस्त्रं विवाहादौ न भादिकम् ॥ ३१
वत्याश्विधनिष्ठासु हस्तादिषु च पञ्चसु । शङ्खविद्रुमरत्नानां परिधानं प्रशस्यते ॥ ३२
ाम्यसार्पधानिष्ठासु त्रिषु पूर्वेषु वौनने(चानले) । क्रीतं हानिकरं द्रव्यं विक्रीतं लाभकृद्भवेत् ३३
अश्विनीस्वातिचित्रासु रेवत्यां वारुणे हरौ । क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवेत् ॥ ३४
रणी त्रीणि पूर्वाणि आर्द्राश्लेषामघानिलाः । वह्निज्येष्ठाविशाखासु स्वामिनो नोपतिष्ठते॥३५
्व्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनम् । उत्तराश्रवणे शाक्रे कुर्याद्राजाभिषेचनम् ॥ ३६
ैत्रं ज्येष्ठं तथा भाद्रमाश्विनं पौषमेव च । माघं चैव परित्यज्य शेषमासे गृहं शुभम् ॥ ३७
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् । स्वाती हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ॥ ३८
ादित्यभौमवर्जं तु वापीप्रासादके तथा । सिंहराशिगते जीवे गुर्वादित्ये मलिम्लुचे ॥ ३९
ाले वृद्धेऽस्तगे शुक्रे गृहकर्म विवर्जयेत् । अग्निदाहो भयं रोगो राजपीडा धनक्षतिः ॥ ४०
ग्रहे तृणकाष्ठानां कृते श्रवणपञ्चके । गृहप्रवेशनं कुर्याद्धनिष्ठोत्तरवारुणे ॥ ४१
ीकाया घटने द्वित्रिपञ्चसप्तत्रयोदशी । नृपदर्शो धनिष्ठासु हस्तपौष्णाश्विनीषु च ॥ ४२
ौत्रयं धनिष्ठाऽऽर्द्रा वह्निः सौम्यविशाखयोः । आश्लेषा चाश्विनी चैव यात्रासिद्धिर्दिसु संपदा
ापूर्वेषु रोहिण्यां सिनीवाली चतुर्दशी । श्रवणा चैव हस्ता च चित्रा चैवाष्टमी तथा ॥ ४४
ेषु यात्रां न कुर्वीत प्रवेशं नैव कारयेत् । *अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ ॥ ४५
्ष्यश्रवणहस्तेषु कृषिकर्म समाचरेत् । पुनर्वसूत्तरास्वातीभगमूलेन्द्रवारुणे ॥ ४६
रोः शुक्रस्य वारे वा वारे च सोमभास्वतोः । वृषलग्ने च कर्तव्यं कन्यायां मिथुने तथा ॥४७
पञ्चदशमी सप्ततृतीया च त्रयोदशी । रेवती रोहिणीन्द्राग्निहस्तमैत्रोत्तरेषु च ॥ ४८
न्वारवर्जं बीजानि वापयेत्संपदर्थ्यपि । रेवतीहस्तमूलेषु श्रवणे भगमैत्रयोः ॥ ४९
तृदैवे तथा सौम्ये +धान्यच्छेदं मृगोदये । हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये ॥ ५०
परे लग्ने गुरोर्वारेऽथ वा भार्गवसौम्ययोः । याम्यादितिमघाज्येष्ठामूलत्तरेषु प्रवेशयेत् ॥ ५१
धनदाय सर्वधनेशाय देहि मे धनं स्वाहा । ॐ नवे हर्षे, इलादेवि लोकसंवर्धिनि कोमक्ष-
पि देहि मे धनं स्वाहा ॥ ५२
स्थं लिखितं धान्यराशिस्थं धान्यवर्धनम् । त्रिपूर्वासु विशाखायां धनिष्ठावारुणेऽपि च ५३
ेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः । देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ॥ ५४
ुनस्थे रवौ दर्शाद्यदि स्याद्द्वादशी तिथिः । सदा तत्रैव कर्तव्यं शयनं चक्रपाणिनः(?)॥५५
ृहतौलिगते चार्के दर्शाद्यद्द्वादशीद्वयम् । आदानिन्द्रसमुत्थानं प्रबोधश्च हरेः क्रमात् ॥ ५६

---

* एतदाद्यर्धद्वय च. पुस्तके एतस्मात्पूर्वमेव सपदेलस्नाम वर्तते । + यथायथ क्रियापदयोजनं कार्यम् ।

---

१ क. ख. च. °पनिष्ठासु । २ क. ख. ग. ङ. च. पूर्वासु । ३ घ. छ. वाहने । ४ क. ख. ग. ङ. च. °हति । द्व° । घ. फलम् । ६ ख. °ते चैव गु° । ७ घ. ध. च. छ. हस्तायां । ८ ख. °द्वियतुष्पदे । नि° । ९ क ख. ग. ङ. च. प्राग् रो° । १० घ. छ. गोष्ठना° । ११ च. °रे सोमसुतस्य च । गृ° । १२ च. न । १३ च. °षा । त्रिप° । १४ च. द्द° । १५ ख. ङ. च । मैत्रं च उ° । १६ ख. ग. घ. छ. °वारे अथ भा° । १७ च. ॐ धीश्रे । १८ घ. छ. । १९ क. ङ. कामरूपिणी । २० क. ख. ग. ङ. चत्रस्थ । च. चक्रस्थं ।

तथा कन्यागते भानौ दुर्गोत्थाने तथाऽष्टमी । निषादेषु च ऋक्षेषु यदा भद्रा तिथिर्भवेत् ॥
भौमादित्यशनैश्चारी(?) विज्ञेयं त्रिपुष्करम् । सर्वकर्मण्युपादेया विशुद्धिश्चन्द्रतारयोः ॥
जन्माश्रितस्त्रिषष्ठश्च सप्तमो दशमस्तथा । एकादशः शशी येषां तेषामेव शुभं वदेत् ॥
शुक्लपक्षे द्वितीयश्च पञ्चमो नवमः शुभः । मित्रातिमित्रसाधकसंपत्क्षेमादितारकाः ॥
जन्मना मृत्युमाप्नोति विपदा धनसंक्षयम् । प्रत्यरौ मरणं विद्यान्निधने याति पञ्चताम् ॥
कृष्णाष्टमीदिनादूर्ध्वं यावच्छुक्लाष्टमीदिनम् । तावत्कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः ॥
वृषे च मिथुने भानौ जीवे चन्द्रेन्द्रदैवते । पौर्णमासी गुरोर्वारे महाज्यैष्ठी प्रकीर्तिता ॥
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी प्रकीर्तिता ॥
स्वात्यन्तरे यत्नविष्णुः शक्रस्योत्थापयेद्ध्वजम् । हयर्क्षपादे चाश्विन्यां सप्ताहान्ते विसर्जयेत् ॥
सर्वं हेमसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥
ध्वाङ्क्षी महोदरी घोरा मन्दा मन्दाकिनी मिश्रा । राक्षसी च क्रमेणार्कसंक्रान्तिर्नामभिः स
वालवे कौलवे नागे तैतिले करणे यदि । उत्तिष्ठ-संक्रमत्यर्कस्तदा लोकः सुखी भवेत् ॥
*गरे ववे वणिग्विष्टौ किंस्तुघ्ने शकुनौ व्रजेत् । राज्ञो दोषेण लोकोऽयं पीड्यते संपदा समम्
चतुष्पाद्विष्टिवाणिज्ये शयितः संक्रमेद्रविः । दुर्भिक्षं राजसङ्घातो दंपत्योः संशयो भवेत् ॥
कृत्तिकाया नवदिनं त्रिरात्रं रोहिणीषु च । +मृगशिरः पञ्चरात्रमार्द्रासु प्राणनाशनम् ॥
पुनर्वसौ च पुष्ये च सप्तरात्रं विधीयते । नवरात्रं तथाऽश्लेषा श्मशानान्तं मघासु च ॥
द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम् । हस्ते तु दृश्यते चित्रेस्त्वर्धमासं तु पीडनम् ॥
मासद्वयं तथा स्वातिविशाखा विंशतिर्दिनम्(?) । मैत्रे चैव दशाहानि ज्येष्ठास्वेवार्धमासकम्
मूलेन जायते मोक्षः पूर्वाषाढा त्रिपञ्चकम् । उत्तरा दिनविंशत्या द्वौ मासौ श्रवणेन च ॥
धनिष्ठा चार्धमासं च वारुणे च दशाहकम् । नैव भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम् ॥
रेवती दशरात्रं च अहोरात्रं तथाऽश्विनी । भरण्यां प्राणहानिः स्याद्धायत्रीहोमतः शुभम् ॥
पञ्चधान्यतिलाज्याद्यैर्धेनुदानं द्विजे शुभम् । दशा सूर्यस्य चाष्टाब्दा इन्दोः पञ्चदशैव तु ॥
अष्टौ वर्षाणि भौमस्य दश सप्त दशा बुधे । दशाब्दानि दशा पञ्चोरूनविंशद्गुरोर्दशा ॥
राहोर्द्वादश वर्षाणि भार्गवस्यैकविंशतिः ॥

इत्यादिमहापुराणे आग्नेये ज्योतिःशास्त्रकथनं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०९

---

* इदमर्धं क० ट० च० पुस्तकेषु नास्ति । + यथाच्छन्दोऽध्याहारेण योजना कर्तव्या । एवमग्र पूर्वत्राग्रे च तत्र द्रष्टव्यम् ।

अथ द्वाविंशत्यधिकशततमोऽध्यायः ।

---

## कालगणनम् ।

अग्निरुवाच—

कालः समागणो वक्ष्ये गणितं कालबुद्धये । कालः समागणोऽर्कघ्नो मासैश्चैत्रादिभिर्युतः ॥ १
द्विघ्नो द्विष्ठः सवेदः स्यात्पञ्चाङ्गोऽष्टयुतो गुणः । त्रिष्ठो मध्यो वसुगणः पुनर्वेदगुणश्च सः ॥ २
अष्टरन्ध्राग्निहीनः स्यादधः सैकरसाष्टकैः । मध्यो हीनः षष्टिहृतो लब्धयुक्तस्तथोपरि ॥ ३
न्यूनः सप्तहृतो वारस्तदधस्तिथिनाडयः । सगुणो द्विगुणश्चोर्ध्वं त्रिभिरूनो गुणः पुनः ॥ ४
अधः खरामसंयुक्तो रसाक्षोष्टफलैर्युतः । अष्टाविंशच्छेषपिण्डास्तिथिनाड्या अधः स्थितैः ॥ ५
गुणस्त्रिसप्तभिरूनोऽर्धं द्वाभ्यां चैव गुणयेत्पुनः । मध्ये वेदैर्गुणः कार्यो ह्यधः सैको नवाग्निभिः ॥ ६
लब्धहीनो भवेन्मध्यो द्वाविंशतित्रिवर्जितः । षष्टिशेष ऋणं ज्ञेयं लब्धमूर्ध(र्ध्व(?)) त्रिनिक्षिपेत् ७
सप्तविंशतिशेषस्तु ध्रुवो नक्षत्रयोगयोः । मासि मासि क्षिपेद्वारं द्वात्रिंशद्घटिकास्तिथौ ॥ ८
द्वे पिण्डे द्वे च नक्षत्रे नाड्य एकादश स्मृते । वारस्थाने तिथिं दद्यात्सप्तभिर्भागमाहरेत् ॥ ९
शेषवाराश्च सूर्याद्या घटिकासु च पातयेत् । पिण्डकेषु तिथिं दद्याद्धरेच्चैव चतुर्दशैः ॥ १०
*ऋणं धनं धनमृणं क्रमाज्ज्ञेयं चतुर्दश । प्रथमे त्रयोदशे पञ्च द्वितीयद्वादशे दश ॥ ११
पञ्चदश तृतीये च तथा चैकादशे स्मृतम् । चतुर्थे दशमे चैव भवेदेकोनविंशतिः ॥ १२
पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः । +षष्ठाष्टमे त्वखण्डाः स्युश्चतुर्विंशतिरेव च ॥ १३
सप्तमे पञ्चविंशः स्यात्खण्डशः पिण्डकाद्भवेत् । कर्कटादौ हरेद्राशिमृतुवेदत्रयैः क्रमात् ॥ १४
तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । मकरादौ दीयते(न्ते(?)) च रसवेदत्रयः क्रमात्
मेषादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । लब्धं खयुगा मेषं मेषादौ विकला धनम् ॥१६
कर्कटे प्रातिलोम्यं स्यादृणमेतत्तुलादिके । चतुर्गुणा तिथिर्ज्ञेया विकलाश्चेह सर्वदा ॥ १७
कन्यादिके गतागामिपिण्डसंख्याफलान्तरैः । षष्ट्याऽऽप्तं मध्यमेऽधार्ये हानौ देयं धने धनम्॥१८
द्वितीयेऽश्वरिते वर्गे वैपरीत्यमिति स्थितिः । तिथिर्द्विगुणिता कार्या षड्भागपरिवर्जिता ॥ १९
रविकर्मविपरीता तिथिनाडीसमायुता । ऋणे शुद्धे तु नाड्यः स्युर्ऋणं शुध्येत नो यदा ॥ २०
सषष्टिकं प्रदेयं तत्षष्ट्याधिक्ये च वर्जयेत् । नक्षत्रं तिथिमिश्रं स्याच्चतुर्भिर्गुणिता तिथिः ॥ २१

---

* इदमर्धं क. ग. ङ. पुस्तकेषु नास्ति । + क ङ. घ. पुस्तकेष्विदमर्धं नास्ति ।

---

१ क. ङ. कालयुद्धये । ख. ग. कालवृद्धये । च. कालसिद्धये । २ ख. ङ. मासर्थै । ३ क. ङ. च. °ङ्गाष्टयु° । ४ क. ङ. त्रिष्ठे म° । ५ क. च. °ष्टिकृतो । ६ क. ङ. °थिनाडिकाः । स° । ७ च. °गुणैः सार्धं त्रिभिर्गुणकगणाः । ८ क. ङ. °णश्चार्धं त्रि° । ९ क. °णो वसवोऽष्ट° । १० क. ङ. °विंशः शेष° । ११ क. ङ. °नापादधः । १२ क. ख. ग. ङ. °तः । मण° । १३ क. ङ. गुणः शेषत्रिरूपोऽथ द्वा° । १४ क. ख. ग. ङ. च गम° । १५ क. ख. ग. ङ. दद्गणाः । १६ ख. ग. सराशि° । १७ क. ङ. °न्मध्ये द्वा° । १८ क. ङ. °शेषो त्वृण । १९ ङ. ज. लब्धः पूर्वे त्रि° । २० ख. °घाह्वारे देव । २१ क. ङ. °द्धरथैव । २२ ख. °ण । धनमृण ध° । २३ घ. छ. °दंश । प्र° । २४ क. ख. ग. ङ. च. द्वात्रिंश° । २५ क. ङ. °स्यात्खण्डकः पि° । २६ ख. लेपतः । २७ घ. च. छ. °ता गता° । २८ ख. ग. °ष्टाप्तमध्यमोधार्यं हा° । २९ क. °धमे द्वार्ये (हार्ये) हा° । ३० क. °चर्हेर्वेष° । ३१ च. °ता । पाटिकं° ।

तिथिस्त्रिभागसंयुक्ता ऋक्षेण च तथाऽन्विता । तिथिरेन्[1] चिता कार्या तैर्द्वादशयोगशोधनम्[3] ॥२२
रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः । एकोना तिथिर्द्विगुणा सप्तभिश्चाकृतिर्द्विधा ॥२३
तिथिश्च द्विगुणैकोना कृताद्यैः करणं निशि । कृष्णचतुर्दश्यन्ते शकुनिः पर्वणीह चतुष्पदम् ॥
प्रथमे तिथ्यर्धतो हि किंस्तुघ्नं प्रतिपन्मुखे ॥ २४

इत्यादिमहापुराणे आग्नेये कालमानं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९३२

---

अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

---

युद्धजयार्णवीयनानायोगाभिधानम् ।

अग्निरुवाच—

वक्ष्ये जयशुभाद्यर्थं सारं युद्धजयार्णवे । अ इ उ ए ओ स्वराः स्युः क्रमान्नन्दादिका तिथिः१
कादिहान्ता भौमरवी ज्ञसोमौ गुरुर्भार्गवौ । शनिर्दक्षिणनाड्यां तु भौमार्कशनयः परे ॥ २
खार्णवा खरसैर्गुण्यो रुद्रैर्भागं समाहरेत् । रसैर्हतं तु तत्कृत्वा पूर्वभागेन(ण) भाजयेत् ॥ ३
वह्निभिश्चाऽऽहतं कृत्वा रूपं तत्रैव निक्षिपेत् । स्पन्दनं नाड्याः पलानि समाणस्पन्दनं पुनः॥४
अनेनैव तु मानेन उदयन्ति दिने दिने । स्फुरणैस्त्रिभिरुच्छ्वास उच्छ्वासैस्तु पलं स्मृतम् ॥५
षष्टिभिश्च पलैर्लिप्ता लिप्तापष्टिस्त्वहर्निशम् । पञ्चमाद्योदये बालकुमारयुवावृद्धकाः ॥ ६
मृत्युर्येनोदयस्तेन चास्तमेकादशांशकैः । कुलागमे भवेद्वृद्धः समृत्युः पञ्चमोऽपि वा ॥ ७

स्वरोदयचक्रम् ।

---

शनिचक्रे चार्धमासं ग्रहाणामुदयः क्रमात् । त्रिभागैः पञ्चदशभिः शनिभागस्तु मृत्युदः ॥ ८

शनिचक्रम् ।

---

दशकोटिसहस्राणि अर्बुदं न्यर्बुदं हरेत् । त्रयोदश च लक्षाणि प्रमाणं कूर्मरूपिणः ॥ ९
मघादौ कृत्तिकाद्यन्तस्तद्देशान्तः शनिस्थितौ ॥

कूर्मचक्रम् ।

---

राहुचक्रे च सप्तोर्ध्वमधः सप्त च संलिखेत् । वाय्वग्न्योश्चैव नैर्ऋत्ये पूर्णिमाऽऽग्नेयभागतः ॥१
अमावास्यां वायवे च राहुर्वं तिथिरूपकः । रेकारं दक्षभागे तु हकारं वायवे लिखेत् ॥ १

---

१ क. छ. °थिरुद्गिता । च. °थिरुद्गिता । २ ग. °दशोर्ध्व° । ३ क. ङ. °र्भो मयेदा° । ४ ख. तच्छेदा ५ क. च. °सच्चिभा° । ६ क. ङ. ए नु स्व° । ख. घ. ए ओमो स्व° । च ए उ ऊं स्व° । ७ क. ङ. °दिता भौ° ८ च. °भास्करा । ग्रा° । ९ क. ङ. °र्कमनयो प° । १० क. ख. °रे । खनुर परसौम्येन ह° । ११ क. ङ. °ल जय ओं र° । घ. ग. °द । जयद ओन र° । १२ क. °शायन तु । १३ च. °दयास्ते° । १४ क ङ. °स्तोर्वा बास्तुभे ग. घ. छ. °युदान्त° । १५ ... ... घ. छ. °दशे च । १८ क पकार । ख, ग, हकारं ।

प्रतिपदादौ ककारादीन्सकारं नैर्ऋते पुनः । राहोर्मुखे तु भङ्गः स्यादिति राहुरुदाहृतः ॥ १२
विष्टिरष्टौ पौर्णमास्यां करालीन्द्रे तृतीयैकम् । घोरा याम्यां तु सप्तम्यां दशम्यां रौद्रसौम्यगा ॥
चतुर्दश्यां तु वायव्ये चतुर्थ्यां वरुणाश्रये । शुक्लाष्टम्यां दक्षिणे च एकादश्यां भृशं त्यजेत् ॥ १४
रौद्रश्चैव तथा श्वेतो मैत्रः सारभटस्तथा । सावित्रो विरोचनश्च जयदेवोऽभिजित्तथा ॥ १५
रावणो विजयश्चैव नन्दी वरुण एव च । यमसौम्यौ भवश्चान्ते दश पञ्च मुहूर्तकाः ॥ १६
रौद्रे रौद्राणि कुर्वीत श्वेते स्नानादिकं चरेत् । मैत्रे कन्याविवाहादि शुभं सारभटे चरेत् ॥ १७
सावित्रे स्थापनाद्यं वा विरोचने नृपक्रिया । जयदेवे जयं कुर्याद्रावणे रणकर्म च ॥ १८
विजये कृषिवाणिज्यं पटबन्धं च नन्दिनि । वरुणे च तडागादि नाशकर्म यमे चरेत् ॥ १९
सौम्ये सौम्यादि कुर्वीत भवेल्लग्नमहर्दिवा । योगा नाम्नाऽविरुद्धाः स्युर्योगा नाम्नैव शोभनाः ॥
राहुरिन्द्रात्समीरं च वायोर्दक्षं यमाच्छिवम् । शिवादाप्यं जलाद्वह्निरग्नेः सौम्यं ततस्त्रयम् ॥२१
ततश्च संक्रमं हन्ति चतस्रो घटिका भ्रमन् ॥ २२

राहुचक्रम् ।

---

चण्डीन्द्राणी वाराही च मुषली गिरिकर्णिका । बला चातिबला क्षीरी मल्लिकाजातियूथिकाः
यथालाभं धारयेत्ताः श्वेतार्कश्च शतावरी । गुडूची वागुरी दिव्या ओषध्यो धारिता जये ॥२४
ॐ नमो भैरवाय खड्गपरशुहस्ताय ॐ ह्रूं विघ्नविनाशाय ॐ ह्रूं फट् ॥ २५
अनेनैव तु मन्त्रेण शिखाबन्धादिकृज्जये । तिलकं चाञ्जनं चैव धूपलेपनमेव च ॥ २६
स्नानपानानि तैलानि योगधूलिमतः शृणु । सुभगा मनःशिला तालं लाक्षारससमन्वितम् ॥ २७
तरुणीक्षीरसंयुक्तो ललाटे तिलको वशे । विष्णुक्रान्ता च सर्पाक्षी सहदेवी च रोचना ॥ २८
अजादुग्धेन संपिष्टं तिलको वश्यकारकः । प्रियंगुकुङ्कुमं कुष्ठं मोहनी तगरं घृतम् ॥ २९
तिलको वश्यकृच्चैव रोचना रक्तचन्दनम् । निशा मनःशिला तालं प्रियंगुः सर्षपास्तथा ॥ ३०
मोहनी हरिता क्रान्ता सहदेवी शिखा तथा । मातुलुङ्गरसैः पिष्टं ललाटे तिलको वशे ॥ ३१
सेन्द्राः सुरा वशं यान्ति किं पुनः क्षुद्रमानुषाः । मञ्जिष्ठा चन्दनं रक्तं कटुकन्दा विलासिनी ३२
पुनर्नवासमायुक्तो लेपोऽयं भास्करो वशे । चन्दनं नागपुष्पं च मञ्जिष्ठा तगरं वचा ॥ ३३
लोध्रं प्रियंगुरजनी मांसीतैलं वशंकरम् ॥ ३४

इत्याग्नेये महापुराणे युद्धजयार्णवीयनानायोगाभिधानं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९६७

---

१ क. स्वातिर्भवेत्तु उद्य° । २ ख. ग छ. °रास्मिन्द्रे । ३ क. छ. च. °यस° । यो° । ४ च. भवनाश्रये ।
५ च. सवित्रो । ६ क. च. वारुणो । ७ च. °चोद्वाहे । ८ क. ड. च. तत. प्रिय° । ९ च. वराही । १० च. क्षीरा ।
११ ख. च. जयेद् । १२ घ. छ. °पञ्चक° । १३ क. ड. च. हू । १४ क. ड. च. हू । १५ क. ड. च. °स्तेद् । ति° ।
१६ क. °क वा जल चं° । १७ क. °मर्दिन° । १८ क. ड. च. महादेवी । घ. छ. सहदेव । १९ क. ड. च. भक्ति-
द्रवे. वि° । २० ख. ग. च. पिष्ट । २१ क. ड. च. भास्करा । २२ क. ड. च. तथा ।

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

---

## युद्धजयार्णवीयज्योति शास्त्रसार ।

अग्निरुवाच—

ज्योतिःशास्त्रादिसारं च वक्ष्ये युद्धजयार्णवे । वेलामन्त्रौषधाद्यं च यथोमामीश्वरोऽब्रवीत् ॥ १

देव्युवाच—

देवैर्जिता दानवाश्च येनोपायेन तद्वद । शुभाशुभविवेकाद्यं ज्ञानं युद्धजयार्णवम् ॥ २

ईश्वर उवाच—

मूलदेवेच्छया जाता शक्तिः पञ्चदशाक्षरा । चराचरं ततो जातं यामाराध्याखिलार्थवित् ॥ ३
मन्त्रपीठं प्रवक्ष्यामि पञ्चमन्त्रसमुद्भवम् । ते मन्त्राः सर्वमन्त्राणां जीविते मरणे स्थिताः ॥ ४
ऋग्यजुःसामाथर्वाख्यवेदमन्त्राः क्रमेण ते । सद्योजातादयो मन्त्रा ब्रह्मा विष्णुश्च रुद्रकः ॥ ५
ईशः सदाशिवो देवाः शब्दाद्याः पञ्च च स्वराः । अ इ उ ए ओं कलाश्च मूल ब्रह्मेति कीर्तितम् ६
काष्ठमध्ये यथा वह्निरप्रबुद्धो न दृश्यते । विद्यमाना तथा देहे शिवशक्तिर्न दृश्यते ॥ ७
आदौ शक्तिः समुत्पन्ना ओंकारस्वरभूषिता । ततो बिन्दुर्महादेवि एकारेण व्यवस्थितः ॥ ८
जातो नाद उकारस्तु नदते हृदि संस्थितः । अर्धचन्द्र इकारस्तु मोक्षमार्गस्य बोधकः ॥ ९
अकारोऽव्यक्त उत्पन्नो भोगमोक्षप्रदः परः । अकार ऐश्वरे भूमिर्निवृत्तिश्च कला स्मृता ॥ १०
गन्धो न बीजः प्राणाख्य इडा शक्तिः स्थिरा स्मृता । इकारश्च प्रतिष्ठाख्यो रसोयानश्च पिङ्गलो
क्रूरा शक्तिरीबीजः स्यादुदवीजोऽभिरूपवान् । विद्या समाना गान्धारी शक्तिश्च दहनी स्मृता
ए शान्तिर्वायुरपस्पर्शो यशोदानश्च क्रिया । ओंकारः शान्त्यतीताख्यैः खशब्दपूषपौल्गिनः १३
पञ्च वर्गाः स्वरो जाताः कुजज्ञगुरुभार्गवाः । शनिः कमादकाराद्याः ककाराद्यास्त्वथः स्थिताः
एतन्मूलमतः सर्वं ज्ञायते सचराचरम् । विद्यापीठं प्रवक्ष्यामि प्रणवः शिव ईरितः ॥ १५
उमा सोमः स्वयं शक्तिर्वामा ज्येष्ठा च रौद्र्यपि । ब्रह्मा विष्णुः क्रमाद्रुद्रो गुणाः सर्गादयस्त्रय
रत्नाडीत्रय चैव स्थूलः सूक्ष्मः परोऽपरः । चिन्तयच्छ्वेतवर्णं तं स्रवमाणं परामृतम् ॥ १७
प्लाव्यमानं यथाऽऽत्मानं चिन्तयेच्च दिवानिशम् । अजरत्वं भवेद्देवि शिवत्वमुपगच्छति ॥ १८
भ्रूमध्यादौ न्यसेदङ्गान्मध्येऽथ देहके । मृत्युञ्जयं ततः मोर्च्य रणादौ विजयी भवेत् ॥ १९
शून्यो निराश्रयः शब्दः स्पर्शस्तिर्यग्गतः स्पृशेत् । रूपस्योर्ध्वगतिः प्रोक्ता जलस्याधः समाश्रिता

[1]सर्वस्थानविनिर्मुक्तो गन्धो मध्ये च मूलकम् । नाभिमूले स्थितं कैन्दं शिवरूपं तु मण्डितम् २१
शक्तिव्यूहेन सोमोऽर्को हरिस्तत्र व्यवस्थितः । दशनाड्युसमोपेतं पञ्चतन्मात्रमण्डितम् ॥ २२
कालानलसमाकारं प्रस्फुरन्तं शिवात्मकम् । तज्जीवं जीवलोकस्य स्थावरस्य चरस्य च ॥
तस्मिन्नष्टे मृतं मन्ये मन्त्रपीठेऽनिलात्मकम् ॥ २३

इत्यादिमहापुराणे आग्नेये युद्धजयार्णवीयज्योतिःशास्त्रसारवर्णनं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९९०

---

अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

---

युद्धजयार्णवीयनानाचक्राणि ।

ईश्वर उवाच—

ॐ ह्रीं कर्णमोटनि बहुरूपे बहुदंष्ट्रे हूं फट्, ॐ हः, ॐ ग्रस ग्रस कृन्त कृन्त च्छक च्छक
हूं फट्, नमः ॥ १
…व्यपानो स्वयं मन्त्रः क्रुद्धः संरक्तलोचनः । मारणे पातने वाऽपि मोहनोच्चाटने भवेत् ॥
कर्णमोटी महाविद्या सर्ववर्णेषु रक्षिका ॥ २

[इति] नानाविद्या(द्याः) ।

---

…कोदयं प्रवक्ष्यामि स्वरोदयसमाश्रितम् । नाभिर्हृदन्तरं यावच्चावश्चरति मारुतः ॥ ३
…च्चाटयेद्रणादौ तु कर्णाक्षीणि प्रभेदयेत् । करोति साधकः क्रुद्धो जपहोमपरायणः ॥ ४
…हृदयात्स्पर्शयुक्तं कण्ठं ज्वरदाहादिमारणे । कण्ठोद्भवो रसो वायुः शान्तिकं पौष्टिकं रसम् ॥ ५
…द्रव्यं स्तम्भं समाकर्षं गन्धो नासान्तिको भुवः । गन्धलीनं मनः कृत्वा स्तम्भयेन्नात्र संशयः
स्तम्भनं कीलनाद्यं च करोत्येव हि साधकः । चण्डघण्टा कराली च सुमुखी दुर्मुखी तथा ॥ ७
रेवती प्रथमा घोरा वायुचक्रे तु ता यजेत् । उच्चाटकारिका देव्यः स्थितास्तेजसि संस्थिताः॥८
सौम्या च भीषणी देवी जया च विजया तथा । अजिता चापराजिता महाकोटी च रौद्रया ९
शुष्ककाया प्राणहरा रसचक्रे स्थिता अमूः । विरूपाक्षी परा दिव्यास्तथा चाऽऽकाशमातरः ॥
संहारी जातहारी च दंष्ट्राला शुष्करेवती । पिपीलिका पुष्टिहरा महापुष्टिप्रवर्धना ॥ ११
भद्रकाली सुभद्रा च भद्रभीमा सुभद्रिका । * स्थिरा च निष्ठुरा दिव्या निष्कम्पा गदिनी तथा
द्वात्रिंशन्मातरश्चक्रे अष्टाष्टकप्रभाः स्थिताः । एक एव रविश्चन्द्र एकश्चैकैकशक्तिका ॥ १३

---

* इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

---

१ क. ङ. 'नेरार्थीपि' । च. 'पंथान' । २ क. ङ. गन्ध । ३ च. आभिव्याप । ४ च. हू । ५ ख. ग. 'मोटनि- भेददरूपे दष्ट्रे हूं फट्, अ ह', ग्रसग्रसकृन्तच्छकच्छक फट्, नम. । ६ क. 'मोटे दष्ट्रे कृन्त्त्नी दष्ट्रे हूं फट्, फट्, [illegible] हा ग' । [illegible] ङ. 'हृदन्त' । ध. छ. 'हृदन्त' । ८ ख. ग. 'त्पादुक' । ९ क ङ. स्पाः । ख. यशम् । १० ख. नाशान्ति' । ११ क. ङ. भवः । ख. च. धुा. । १२ घ. [illegible] छ. 'कैमु हा' । १३ क. ङ. 'हारा जिनहा' । १४ क. ख. ग. ङ. दशनी १५ क. ख. ग. ङ. शुष्कं' । १६ क. ङ. पिति' । १७ ङ. 'ष्टिहारा च म' । १८ क. घ. ङ. 'धंके सर्वाक्तिका. । मू' ।

मूलभेदेन तीर्थानि यथा तोयं महीतले । प्राण एको मरुन्नैश्च भिद्यते भूतपञ्जरे ॥
वामदक्षिणयोगेन दशधा संप्रवर्तते । त्रि(त्रि)न्दुमण्डविचित्रं च तत्त्वरूपेण वेष्टितम् ॥
ब्रह्माण्डेन कपालेन पिबेत परमामृतम् । पञ्चवर्गबलाद्युद्धे जयो भवति तत्क्षणम् ॥
अआकचटतपयाः श आद्यो वर्ग ईरितः । इईखछठथफराः षो वर्गश्च द्वितीयकः ॥
उऊगजडदवलाः सो वर्गश्च तृतीयकः । एऐघझढधभवा हो वर्गश्च चतुर्थकः ॥
ओऔअंअः,ङञणनमा मो वर्गः पञ्चमो भवेत् । वर्णाश्चाभ्युदये नृणां चत्वारिंशच्च पञ्च च ॥
बालः कुमारो युवा स्याद्वृद्धो मृत्युश्च नामतः । आत्मपीडाश्च शोषकः स्यादुदासीनश्च कालदः
कृत्तिका प्रतिपच्चैव आत्मनो लाभदः स्मृतः । षष्ठी भौमो मघा पीडा चार्द्रा चैकादशी कुज
मृत्युर्मघा द्वितीया ज्ञो लाभश्चाऽऽर्द्रा च सप्तमी । बुधोऽहनि भरणी ज्ञः श्रवणं काल ईदृशः
जीवो लाभाय च भवेत्तृतीया पूर्वफल्गुनी । जीवोऽष्टमी धनिष्ठाऽऽर्द्रा जीवोऽश्लेषा त्रयोदशी
मृत्यौ शुक्रश्चतुर्थी स्यात्पूर्वभाद्रपदो प्रिये । पूर्वाषाढा च नवमी शुक्रः पीडाकरो भवेत् ॥
भरणी भूतजा शुक्रो यमदण्डो हि हानिकृत् । कृत्तिका पञ्चमी मन्दो लाभाय तिथिरीरिता
आ(अ)श्लेषा दशमी मन्दो योगः पीडाकरो भवेत् । मघा शनिः पूर्णिमा च योगो मृत्युकरः स्मृ

[इति] तिथियोग (गः) ।

---

पूर्वोत्तराग्निनैर्ऋत्यदक्षिणानिलचन्द्रगाः । ब्रह्मेशाः स्युर्दृष्टयः स्युः प्रतिपन्नवमीमुखाः ॥
राशिभिः सहिता दृष्टा ग्रहाश्चः सिद्धये स्मृताः । मेषाद्याश्चतुरः कुम्भौ मीनः पूर्णेऽन्यथा
सूर्यादि रिक्ता पूर्णा च क्रमादेवं प्रदापयेत् । रणे सूर्ये फलं नास्ति सोमे भङ्गः प्रशाम्यति॥
कुजेन कलहं विद्याद्बुधः कामाय वै गुरुः । जयाय मेनसे शुक्रो मन्दे भङ्गो रणे भवेद् ॥
देयानि पिङ्गलाचक्रे सूर्यगानि(णि) च भानि हि । मुखे नेत्रे ललाटेऽथ शिरोहस्तोरुपादके॥
*पादे मृतिस्त्रिकस्थे स्यात्त्रीणि पक्षेऽर्थनाशनम् । मुखस्थे च भवेत्पीडा शिरःस्थे कार्यनाशनम्
कुक्षिस्थिते फलं स्याच्च राहुचक्रं वदाम्यहम् । इन्द्राद्य नैर्ऋते गच्छेन्नैर्ऋतात्सोममेव च ॥
सोमाद्धुताशनं यक्रेदाप्यभाप्याच्छिवालयम् । रुद्रायवं यमाद्वायु वायोश्चन्द्रं व्रजेत्पुनः ॥
ऐन्द्रे चतस्रो नाड्य(डी)स्तु राहुः पृष्ठे जयो रणे । +अग्रतो मृत्युमाप्नोति तिथिराहुं वदामि ते
आग्नेयादि शिवान्तं च पूर्णिमामादितः प्रिये । पूर्वे कृष्णाष्टमीं यावद्राहुर्दृष्टो जयो भवेत् ॥
ऐशान्याग्नेयनैर्ऋत्यवायव्ये फणिराहुकः । मेषाद्या दिशि पूर्वादौ पश्चाऽऽदित्योऽग्रतो मृतिः

* इदमर्धं नास्ति क ढ पुस्तकयोः । + इदमर्धं नास्ति क क पुस्तकयो ।

१ घ ढ. भिन्नानि । २ क ङ °पस घ । वा° । ३ क ङ विष्णुमाण्डविचित्र च तत्त्वे व° । ४ क ङ 'वत्स भयाऽमु° । ५ क ■ कार्तिकी । ६ क ढ म अश्वारोहस्य स्मृता । प° । ७ क ङ 'ज्ञा भवार्द्रातिथिस° । ८ छ पुपे हानिर्भ° । ९ क ढ °दाव ये । १० क ढ मृतना । ११ घ छ हानिकम् । १२ क ढ मन्त्रो । १३ क °श्ले ए° । १४ ङ घ छ °द्रमा । ब्र° । १५ ख °दा[या]श्चिषु पृष्ठे स्यु । १६ क ढ 'स्युश्चिदण्डी स्यु १७ क ङ 'म्मा यशेत्पूर्णाऽय° । १८ रा जयपू° । १९ क ङ न भाति सो° । २० क ङ हानये । २१ ख भु° षट्टर्दृ° । २३ ख °दृष्ट ट° । २४ क ढ मध्या दिशि वाऽन्ते च । २५ क ढ °द्युष्टे ज° । २६ ख ग । २७ ख ग °त्यो गता ।

तीया कृष्णपक्षे तु सप्तमी दशमी तथा । चतुर्दशी तथा शुक्ले चतुर्थ्येकादशी तिथिः ॥ ३८
द्वादशी विघ्नयः स्युः पूर्णिमाऽऽग्नेयवायवे । अकचटतपयशा वर्गाः सूर्यादयो ग्रहाः ॥ ३९
ग्रोलूकश्येनकाश्च पिङ्गलः कौशिकः क्रमात् । सारसश्च मयूरश्च गोवत्सः पक्षिणः स्मृताः॥४०
गादौ साध्यो हुतो मन्त्र उच्चाटे पल्लवः स्मृतः । वश्ये ज्वरे तथाऽऽकर्षे प्रयोगः सिद्धिकारकः
ान्तौ मीतौ नमस्कारो वौषट्पुष्टौ वशादिषु । हुं मृत्यौ मीतिसंनाशे विद्वेषोच्चाटने च फट् ॥
पेट्सुते च दीप्त्यादौ मन्त्राणां जातयश्च षट् । ओषधीः संप्रवक्ष्यामि महारक्षाविधायिनीः ४३
हाकाली तथा चण्डी वाराही चेश्वरी तथा । सुदर्शना तथेन्द्राणी गात्रस्था रक्षयन्ति तम् ॥
ला चातिबला भीरुर्मुसली सहदेव्यपि । जाती च मल्लिका यूथी गारुडी भृङ्गराजकः ॥ ४५
क्ररूपा महौषध्यो धारिता विजयादिदाः । ग्रहणे च महादेवि उद्धृताः शुभदायिकाः ॥ ४६
दा च कुञ्जरं कृत्वा सर्वलक्षणलक्षितम् । तस्य पादतले कृत्वा स्तम्भयेच्छत्रुमारणः ॥ ४७
गाग्रे चैकवृक्षे च वज्राहतप्रदेशके । वल्मीकमृदमाहृत्य मातरौ योजयेत्ततः ॥ ४८
ॐ नमो महाभैरवाय विकृतदंष्ट्रोग्ररूपाय पिङ्गलाक्षाय त्रिशूलखड्गधराय वौषट् ॥ ४९
जयेत्कर्दमां देवीं स्तम्भयेच्छस्त्रजालकम् । अग्निकार्यं प्रवक्ष्यामि रणादौ जयवर्धनम् ॥ ५०
मशाने निशि काष्ठाग्नौ नग्नो मुक्तशिखो नरः । दक्षिणास्यस्तु जुहुयान्नृमांसं रुधिरं विषम् ॥
तुषास्थिखण्डमिश्रं तु शत्रुनाम्ना शताष्टकम् ॥ ५१
ॐ नमो भगवति कौमारि लल लल लालय लालय घण्टादेवि, अमुकं मारय मारय सहसा
नमोऽस्तु ते भगवति विद्ये स्वाहा ॥ ५२
अनया विद्यया होमादन्धत्वं जायते रिपोः ॥ ५३
ॐ वज्रकाय वज्रतुण्ड कपिल पिङ्गल करालवदनोर्ध्वकेश महाबल रक्तमुख तडिज्जिह्व महारौद्र
दंष्ट्रोत्कट कहँ करालिन्महोदृढप्रहार लङ्केश्वर सेतुबन्ध शैलप्रवाह गगनचर, एह्येहि भगवन्महा-
बलपराक्रम भैरवो ज्ञापयति, एह्येहि महारौद्र दीर्घलाङ्गूलेन, अमुकं वेष्टय वेष्टय जम्भय
जम्भय खन खन वैते हूं फट् ॥ ५४
अष्ट(ष्टा)त्रिंशच्छतं देवि हनुमान्सर्वकर्मकृत् । पठेद्(द्ध)नुमतश्चेद्देशाद्भ्रमायान्ति शत्रवः ॥ ५५

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयनानाचक्रप्रतिपादनं नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०४९

---

* इदमर्धं नास्ति क ड च पुस्तकेषु ।

१ घ छ मोरट्टः । २ क ङ मूलो । ३ क ङ °पडर्णा । ४ ख हूम् । ५ क ङ °षट्, स्तम च भीप्यादौ । ६ ख दिष्टपादौ । ७ क ङ च दन्ता । ८ क ङ °भृङ्गा । ९ क ङ भस्म । १० क. ङ नागार्ध । ११ घ ङ. च. भैरवाय । १२ क ङ च °पिङ्गाक्षाय । १३ क ङ घ °य खड्गपरशुखट्वाङ्गचक्रधराय । १४ ख ग घ छ °दंस देवि स्त° । १५ क °ल लेलुक लेलुक ल° । ङ °ल लेलुक लेलुक ल° । १६ क ङ °क तारय तारय त° । १७ क ङ नमति । १८ क ङ वेध । १९ क ङ होमोत्पत्त्या । २० ख ग °दग्धं । २१ क ङ क्षायद् । २२ ख ग °हुटहुट° । २३ क. ङ कट्कटा° । २४ क ख ग ङ °टिलि महा° । २५ क ङ °हाट्टहास° । २ ख. ग °प्रकार । २७ ख ग सेतुबन्ध । २८ क ङ °तुरूपदे° । २९ घ छ °ष त्र° । ३० क ङ °य पद्दय पद्दय रोम हूं हूं फ° । ३१ क ङ °इ । फट्, ह° । ३२ घ छ पठे हनुमतश्चेदनाद् । ३३ ख ग. °श्चेदनाद्° ।

अथ एकविंशत्यधिकशततमोऽध्यायः ।

नक्षत्रनिर्णयः ।

ईश्वर उवाच—
वक्ष्याम्यृक्षात्मकं पिण्डं शुभाशुभविशुद्धये । यस्मिन्नृक्षे भवेत्सूर्यस्तदादौ त्रीणि मूर्धनि ॥ १
एकं मुखे द्वयं नेत्रे हस्तपादे चतुष्टयम् । हृदि पञ्च सुते जानौ आयुर्वृद्धिं विचिन्तयेत् ॥ २
शिरःस्थे तु भवेद्राज्यं पिण्डतो वक्त्रयोगतः । नेत्रयोः कान्तिसौभाग्यं हृदये द्रव्यसंग्रहः ॥ ३
हस्ते धृतं तस्करत्वं गतासुरध्वगः पदे । कुम्भाष्टके भानि लिखेत् सूर्यकुम्भस्तु रिक्तकः ॥ ४
अशुभः सूर्यकुम्भः स्याच्छुभः पूर्वादिसंस्थितः । फणिराहुं प्रवक्ष्यामि जयाजयविवेकदम् ॥ ५
अष्टाविंशाल्लिखे(?)द्विन्दून्पुनर्भाज्यास्त्रिभिस्त्रिभिः । अथ नक्षत्राणि चत्वारि रेखास्तत्रैव दापयेत्॥
यस्मिन्नृक्षे स्थितो राहुस्तदृक्षं फणिमूर्धनि । *तदादि विन्यसेद्भानि सप्तविंशत्क्रमेण (?) तु ॥ ७
वक्त्रे सप्तगत नक्षत्रे म्रियते सर्व आहवे । स्कन्धे भङ्गं विजानीयात्संस्थितेषु च मध्यतः ॥ ८
उदरस्थेन पूजा च जयश्चैवाऽऽत्मनस्तथा । कटिदेशे स्थिते योध आहवे हरते परान् ॥ ९
पुच्छस्थितेन कीर्तिः स्याद्राहुदृष्टे च भे मृतिः । पुनरन्य म(न्यत्प्र)वक्ष्यामि रविराहुबलं तव ॥
रविः शुक्रो बुधश्चैव सोमः सौरिर्गुरुस्तथा । लोहितः सैंहिकश्चैव एते यामार्धभागिनः ॥ ११
सौरिं रविं च राहुं च कृत्वा यत्नेन पृष्ठतः । स जयेत्सैन्यसंघातं द्यूतमध्वानमाहवम् ॥ १२
रोहिणी चोत्तरास्तिस्रो मृगः पञ्च स्थिराणि हि । अश्विनी रेवतीस्वाती धनिष्ठा शततारका ॥
क्षिप्राणि पञ्च भान्येव यात्रार्थी चैव योजयेत् । अनुराधा हस्तमूलं मृगः पुष्यं पुनर्वसुः ॥ १४
सर्वकार्येषु चैतानि ज्येष्ठा चित्रा विशाखया । +पूर्वास्तिस्रोऽग्निर्भरणी मघार्द्राश्लेषा दारुणाः॥
स्थावरेषु स्थिरं भूतं यात्रायां क्षिप्रमुत्तमम् । *सौभाग्यार्थे मृदून्येव उग्रेषूग्रं तु कारयेत् ॥ १६
दारुणे दारुणं कुर्याद्विद्विष्ये चाधोमुखादिकम् । कृत्तिका भरण्या(ण्य)श्लेषा विशाखा पितृनैर्ऋतम्
पूर्वात्रयमधोवक्त्रं कर्म चाधोमुखं चरेत् । एषु कूपतडागादि विद्याकर्म भिषक्क्रिया ॥ १८
स्थापनं नौकाकूपादिविधानं खननं तथा।रेवती चाश्विनी चित्रा हस्तः स्वा(स्तस्वा)ती पुनर्वसुः
अनुराधा मृगो ज्येष्ठा नव वै पार्श्वतोमुखाः । एषु राज्याभिषेकं च पट्टबन्धं गजाश्वयोः ॥ २०
आरामगृहप्रासादं प्राकारं क्षेत्रतोरणम् । ध्वजचिह्नपताकाश्च सर्वानेतांश्च कारयेत् ॥ २१
द्वादशी सूर्यदग्धा तु चन्द्रेणैकादशी तथा । भौमेन दशमी दग्धा तृतीया वै बुधेन च ॥ २२
षष्ठी च गुरुणा दग्धा द्वितीया भृगुणा तथा । सप्तमी सूर्यपुत्रेण त्रिपुष्करमथो वदे ॥ २३
द्वितीया द्वादशी चैव सप्तमी वै तृतीयया । रविर्भौमस्तथा सौरिः षडेतास्तु(ते तु) त्रिपुष्कराः ॥
विशाखा कृत्तिका चैव उत्तरे द्वे पुनर्वसुः । पूर्वभाद्रपदा चैव षडेते तु त्रिपुष्कराः ॥ २५

* इदमर्धं नास्ति क. ख पुस्तकयोः । + इदमर्धं ग ड पुस्तकयोर्नास्ति । * इदमर्धं [illegible] ड पुस्तकयोर्नास्ति ।

१ क. ङ 'शशुले भानि लानु' । २ घ ग च जानौ । ३ क ङ 'तायुर' । ४ क ङ 'स्य पूर्वकु' । ५ ङ पूर्वस्थ । ६ क ङ पात्त्विसर्द । ७ घ. पश्चिराद् । ७ घ. ङ 'मर्तोज्यार्य' । ८ क ङ तु । पके सप्तदे रा । ९ ङ ङ 'रेखस्तदु' । १० घ 'सन्तु । न 'सन्तु च मध्ये । ङ । ११ क ङ. 'दयदे' । १२ क ङ । १३ ङ ङ 'साधारि चर्ने' । १४ क. ङ अथवा । १५ क ङ तृतीया ।

लाभो हानिर्जयो वृद्धिः पुत्रजन्म तथैव च । नष्टं भ्रष्टं विनष्टं वा तत्सर्वं त्रिगुणं भवेत् ॥ २६
अश्विनी भरणी चैव अश्लेषा पुष्यमेव च । स्वातिश्चैव विशाखा च श्रवणं सप्तमं पुनः ॥ २७
एतानि दृढचक्षूंषि पश्यन्ति च दिशो दश । यात्रासु दूरगस्यापि आगमः पुण्यगोचरे ॥ २८
आषाढे रेवती चित्रा केकराणि पुनर्वसुः । एषु पञ्चसु ऋक्षेषु निर्गतस्याऽऽगमो भवेत् ॥ २९
कृत्तिका रोहिणी सौम्यं फल्गुनी च मघा तथा । मूलं ज्येष्ठाऽनुराधा च धनिष्ठा शततारका ॥
पूर्वभाद्रपदा चैव चिपिटानि च तानि हि । अध्वानं व्रजमानस्य पुनरेवाऽऽगमो भवेत् ॥ ३१
हस्त उत्तरभाद्रश्च आर्द्राऽऽषाढा तथैव च । नष्टार्थाश्चैव दृश्यन्ते सङ्ग्रामो नैव विद्यते ॥ ३२
पुनर्वक्ष्यामि गण्डान्तमृक्षमध्ये यथा स्थितम् । रेवत्यन्ते(न्तं) चतुष्कं तु अश्विन्यादिचतुष्टयम् ॥
[illegible] [illegible] [illegible]ं तु वर्जयेत्सर्वयत्नतः । अश्लेषान्ते मघादौ तु घटिकानां चतुष्टयम् ॥ ३४
द्वितीयं गण्डमाख्यातं तृतीयं भैरवि शृणु । ज्येष्ठामूलभयोर्मध्य उग्ररूपं तु यामकम् ॥ ३५
न कुर्याच्छुभकर्माणि यदीच्छेदात्मजीवितम् । दारके जातकाले चैं म्रियेते *पितृमातरौ ॥ ३६

इत्यादिमहापुराणे आग्नेये नक्षत्रनिर्णयप्रतिपादनं नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०८१

अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

नानाबलानि ।

ईश्वर उवाच—

विष्कम्भे घटिकास्तिस्रः शूले पञ्च विवर्जयेत् । षड्गण्डेऽतिगण्डे च नव व्याघातवज्रयोः ॥ १
परिघे च व्यतीपाते उभयोरपि तद्दिनम् । वैधृते(तौ) तद्दिनं चैव यात्रायुद्धादिकं त्यजेत् ॥ २
ग्रहैः शुभाशुभं वक्ष्ये देवि मेषादिराशितः । चन्द्रशुक्रौ च जन्मस्थौ वर्जितौ शुभदायकौ ॥ ३
द्वितीयो मङ्गलोऽथार्कः सौरिश्चैव तु सैंहिकः । द्रव्यनाशमलाभं च आहवे भङ्गमादिशेत् ॥ ४
सोमो बुधो भृगुर्जीवो द्वितीयस्थाः शुभावहाः । तृतीयस्थो यदा भानुः शनिर्भौमो भृगुस्तथा ५
बुधश्चैवेन्दू राहुश्च सर्वे ते फलदा ग्रहाः । बुधशुक्रौ चतुर्थौ च शेषाश्चैव भयावहाः ॥ ६
पञ्चमस्थो यदा जीवः शुक्रः सौम्यश्च चन्द्रमाः । ददेत चेप्सितं लाभं षष्ठे स्थाने शुभो रविः ७
चन्द्रः सौरिर्मङ्गलश्च ग्रहा देवि स्वराशितः । बुधश्च शुभदः षष्ठे त्यजेत्षष्ठं गुरुं भृगुम् ॥ ८
सप्तमोऽर्कः शनिर्भौमो राहुर्हान्यै सुखाय च । जीवो भृगुश्च सौम्यश्च बुधशुक्रौ चाष्टमौ शुभौ ॥९
+शेषा ग्रहास्तथा हान्यै बुधभृगू नवमौ शुभौ । शेषा हान्यै च लाभाय दशमौ भृगुभास्करौ १०
शनिर्भौमश्च राहुश्च चन्द्रः सौम्यः शुभावहः । शुभायैकादशे सर्वे वर्जयेद्दशमं गुरुम् ॥ ११

* मध्यमपदलोपी समासः । + इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

१ क. ङ. दृष्टं । २ क. ङ. °ण्यगोत्तरे । ३ क. ङ. आषाढा । ४ घ. छ. °तुर्वादि अ° ५ क. ङ. °यं [illegible]°—
६ घ. छ. °ष्ठामूलयो° ७ । क. च निपात्ये पितृमातृके । ई° । ८ क. ङ. षड्च गण्डातिगण्डति न° । ९ क. ङ. ।
१० च. °यो भानुश्च शनिस्तथा । द्वितीयस्थो यदा राहु सर्वे । ११ क. ङ. °श्च ग्रहादेव स्वराशित । बु° । १
शुभे । १३ क. ङ. °जेद्बुध शु° । १४ क. ङ. °रौ । नातेर्मौ° । १५ घ. छ. °शमे गु° ।

बुधशुक्रौ द्वादशस्थौ शेषान्द्वादशगांस्त्यजेत् । अहोरात्रे द्वादश स्यू राशयस्तान्वदाम्यहम् ॥ १२
मीनो मेषोऽथ मिथुनं चतस्रो नाडयो(?) वृषः । +पट्कपट्कर्कसिंहकन्याश्च तुला पञ्च च वृश्चिकः
धनुर्नक्रो घटश्चैव सूर्यगो राशिनायकः । चरस्थिरद्विस्वभावा मेषाद्याः स्युर्यथाक्रमम् ॥ १४
कुलीरो मकरश्चैव तुलामेषादयश्चराः । चरकार्यं जयं[3] काममाचरेच्च शुभाशुभम् ॥ १५
स्थिरो वृषो हरिः कुम्भो वृश्चिकः स्थिरकार्यके । शीघ्रः समागमो नास्ति रोगार्तो नैव मुच्यते॥
मिथुनं कन्यका मीनो धनुश्च द्विस्वभावकः । द्विस्वभावाः शुभाश्चैते सर्वकार्येषु नित्यशः ॥ १७
यात्रावाणिज्यसङ्ग्रामे विवाहे राजदर्शने । वृद्धिं जयं तथा लाभं युद्धे मपमवाप्नुयात् ॥ १८
अश्विनी त्रिंशत्ताराश्च (रा च) तुरगस्याऽऽकृतिर्यथा । यद्यश्च कुरुते वृष्टिमेकरात्रं मर्षपति ॥
यमभे तु यदा वृष्टिः पक्षमेकं तु वर्षति ॥ १९

इत्यादिमहापुराण आग्नेये मानावलक्षणं नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१००

---

अथाष्टाविंशत्यधिकशततमोऽध्यायः ।

---

कोटचक्रम् ।

ईश्वर उवाच—

कोटचक्रं प्रवक्ष्यामि चतुरस्रं पुरं लिखेत् । चतुरस्रं पुनर्मध्ये तन्मध्ये चतुरस्रकम् ॥
नाडीत्रितयचिह्नाढ्यं मेषाद्याः पूर्वदिङ्मुखाः । कृत्तिका पूर्वभागे तु अश्लेषाऽऽग्नेयगोचरे ॥
भरणी दक्षिणे देया विशाखां नैर्ऋते न्यसेत् । अनुराधां पश्चिमे च श्रवणं वायुगोचरे ॥
धनिष्ठां चोत्तरे न्यस्य ऐशान्यां रेवतीं तथा । बाह्यनाड्यां स्थितान्येन अष्टौ ऋक्षाणि यत्न
रोहिणीपुष्यफल्गुन्यः स्वाती ज्येष्ठा क्रमेण तु । अभिजिच्छततारा तु अश्विनी मध्यनाडिका
कोटमध्ये तु या नाडी कथयामि प्रयत्नतः । मृगश्चाभ्यन्तरे पूर्वे तस्याऽऽग्नेये पुनर्वसुः ॥
उत्तरा फल्गुनी याम्ये चित्रा नैर्ऋतसंस्थिता । मूलं तु पश्चिमे न्यस्योत्तराषाढां तु वायवे ॥
पूर्वभाद्रपदा सौम्ये रेवती ईशगोचरे । कोटस्याभ्यन्तरे नाडी ऋक्षाष्टकसमन्विता ॥
आर्द्रा हस्तस्तथाऽऽषाढाचतुष्कं चोत्तरात्रिकम् । ( ऋमध्ये स्तम्भचतुष्कं तु दद्यात्कोटस्य कोट
एवं दुर्गस्य विन्यासं योधे स्थानं दिशाधिपात् ।) आगन्तुको यदा योद्धा ऋक्षवान्स्यात्फलान्वि
कोटमध्ये ग्रहाः सौम्या यदा ऋक्षान्विताः पुनः । जयं मध्यस्थितानां तु भङ्गमागामिनो वि
प्रवेशभे प्रवेष्टव्यं निर्गमभे च निर्गमे(च्छे)त् । भृगुः सौम्यस्तथा भौम ऋक्षान्तं सकलं यदा

---

+ "पट्सट्कर्कसिंहकन्यास्तुला" इति पाठो युक्तः । ⁎ धनुश्चिह्नान्तर्गतं नास्ति क. ड. पुस्तकयोः ।

---

१ क. ड. "दशोऽमी शे" । २ क. ट. राशिनायकम् । च" । ३ क. ड. शीघ्रागमो यमो । ४ ख. ग. घ. ङ." । ५ क. ड. वृष्टिं. पक्ष" । ६ क. ड. पादशः । ७ क. ड. "त. । मूलाश्च" । ■ क. ख. ग. ड. षां" । ९ क. ड. "का मूल्यपं चोत्तरान्तिक" । १० ख. ग. बाह्यनाड्यन्दे" । ११ ख. ग. "पाद् । अ

सद्योदेवा द्वितीयं तु हृदयं[1] चाङ्गसंयुतम् । चतुर्थं तु शिरो विद्धि ईश्वरं नाम नामतः ॥ १२
(*उड्डकर्णशिखा ज्ञेया विश्वरूपसमन्विता । तन्मन्त्रपद्संख्यातं नेत्रं तु दशमं मतम् ) ॥ १३
अस्त्रं शशी समाख्यातं शिवसंज्ञं शिखिध्वजः । नमः स्वाहा तथा वौषड् हूंफं च पट्कक्रमेण तु
जातिपट्कं हृदादीनां प्रासादं मन्त्रमावदे । ईशानाद्रुद्रसंख्यातं मोदरंचांशुरञ्जितम् ॥ १५
औषधाक्रान्तशिरसमुद्रकस्योपरि स्थितम् । अर्धचन्द्रोर्ध्वनादश्च विन्दुद्वितयमध्यगम् ॥ १६
तदन्ते विश्वरूपं तु कुटिलं तु त्रिधा ततः । एवं प्रासादमन्त्रश्च सर्वकर्मकरो मनुः ॥ १७
शिखाबीजं समुद्धृत्य फट्कारान्तं तु चैव फट् । अर्धचन्द्रासनं ज्ञेयं कामदेवससर्पकम् ॥ १८
महापाशुपतास्त्रं तु सर्वदुष्टप्रमर्दनम् । प्रासादः सकलः प्रोक्तो निष्कलः प्रोच्यतेऽधुना ॥ १९
सौपर्णं विश्वरूपं तु रुद्राख्यं सूर्यमण्डलम् । चन्द्रार्धनादसंयोगं विसंज्ञं कुटिलं ततः ॥ २०
निष्कलो भुक्तिमुक्तौ स्यात्पञ्चाङ्गोऽयं सदाशिवः । †अंशुमान्विश्वरूपं च आहूतं शून्यरञ्जितम् ॥
प्रणवाङ्करहितः शून्यस्तस्य मूर्तिरसस्वरः । विघ्ननाशाय भवति पूजितो वेतालवालधिः ॥ २२
अंशुमान्विश्वरूपाख्यमुद्रकस्योपरि स्थितम् । कलाद्यं सकलस्यैव पूजाङ्गादि च सर्वदा ॥ २३
नरसिंहं कृतान्तस्थं तेजस्वी प्राणमूर्ध्वगम् । अंशुमानुदकाक्रान्तमधोर्ध्वं स्वमलंकृतम् ॥ २४
चन्द्रार्धनादनादान्तं ब्रह्मविष्णुविभूषितम् । उदधिं नरसिंहं च सूर्यमात्राविभेदितम् ॥ २५
यदा कृतं तदा तस्य ब्रह्माण्यङ्गानि पूर्ववत् । ओजाख्यमंशुमयुक्तं प्रथमं वर्णमुद्धरेत् ॥ २६
अंशुमत्यांशुनाऽऽक्रान्तं द्वितीयं वर्णनायकम् । अंशुमानीश्वरं तद्वत्तृतीयं मुक्तिदायकम् ॥ २७
ऊहकश्चांशुनाऽऽक्रान्तं वरुणं प्राणतैजसम् । पञ्चमं तु समाख्यातं कृतान्तं तु ततः परम् ॥ २८
अंशुमानुदकमाणः सप्तमं वर्णमुद्धृतम् । पद्मबिन्दुसमाक्रान्तं नन्दीशमेकपादधृक् ॥ २९
प्रथमं चान्वतो योज्यं क्षपणं दशबीजकम् । अस्याऽऽद्यं च तृतीयं च पञ्चमं सप्तमं तथा ॥ ३०
सद्योजातं तु नवमं द्वितीयं हृदयादिकम् । दश तु प्रणवं यत्तु फडन्तं चास्त्रमुद्धरेत् ॥ ३१
नमस्कारैर्युतान्यत्र ब्रह्माङ्गानि(णि) तु नान्यथा । द्वितीयादष्टमं यावदष्टौ विद्येश्वरा मताः ॥ ३२
अनन्तेशश्च सूक्ष्मश्च तृतीयश्च शिवोत्तमः । एकमूर्त्येकरूपस्तु त्रिमूर्तिरपरस्तथा ॥ ३३
श्रीकण्ठश्च शिखण्डी च अष्टौ विद्येश्वराः स्मृताः । शिखण्डिनोऽप्यनन्तान्तं मन्त्रान्तं मूर्तिरीरिता

इत्यादिमहापुराणे आग्नेये सकलादिमन्त्रोद्धारवर्णनं नाम सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९४८४

---

अथाष्टादशाधिकत्रिशततमोऽध्यायः ।

---

गणपूजा ।

ईश्वर उवाच—

विश्वरूपं समुद्धृत्य तेजसुपरि संस्थितम् । नरसिंहं ततोऽधस्तात्कृतान्तस्तदधो न्यसेत् ॥ १

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. ङ. पुस्तकयोर्नास्ति । † एतदर्धस्थाने " अङ्गानि प्रवाश्च सोऽमृत पूर्णरञ्जि-तम् " इति क ङ. पुस्तकयोः ।

---

१ क. ङ. 'य चाङ्गक । २ क. ङ. नि.धइ । ३ ख ग. 'रधमम् । वि' । ४ ख. वालवालधिः । ५ क. ग. ङ. च. 'मूर्धग' । ६ ख. 'न या ततो । ७ क. ङ 'रमुदाहृत प' । ८ क. ङ. तु याऽन्य' । ९ क. ङ. च. 'कदस्तु । १० क. ङ. 'धा । शिखण्डश्च । ११ ख. ग. श्रीकण्ठश्च ।

प्रणवं तदधः कृत्वा ऊरुकं तदधः पुनः । अंशुमान्विश्वमूर्तिस्यं कण्ठोष्ठे प्रणवादिकः ॥ २
नमोन्तः स्याच्चतुर्वर्णो विश्वरूपं च कारणम् । सूर्यमात्राहतं ब्रह्मण्यङ्गानीह तु पूर्ववत् ॥ ३
रुद्रैस्प्रणवं पूर्वं प्रस्फुरद्वयमुच्चरेत् । घोरघोरतरं पश्चादनुरूपमतः स्मरेत् ॥ ४
चटेशब्दं द्विधा कृत्वा ततः प्रणवमुच्चरेत् । दहेति च द्विधा कार्यं धेमेति च द्विधा मतम् ॥ ५
घातयेति द्विधा कृत्वा हूंफडन्तं समुच्चरेत् । अघोरास्त्रं तु नेत्रं स्याद्गायत्री चोच्यतेऽधुना ॥ ६
तन्महेशाय विद्महे महादेवाय धीमहि । तन्नः शिवः प्रचोदयाद्गायत्री सर्वसाधनी ॥ ७
यात्रायां विजयादौ च यजेत्पूर्वं गणं श्रिये । तुर्यास्ते तु पुरा क्षेत्रे समन्तादर्कभाजिते ॥ ८
चतुष्पदं त्रिकोणे तु त्रिदलं कमलं लिखेत् । तत्पृष्ठे पदिकावीथिभागे त्रिदलमश्वयुक् ॥ ९
वसुदेवसुतैः सार्द्धैस्त्रिदलैः पादपट्टिका । तदूर्ध्वे वेदिका देया भागमात्रप्रमाणतः ॥ १०
द्वारं पद्ममितं काष्ठानुपद्वारं विवर्धितम् । द्वारोपद्वाररचितं मण्डलं विघ्नसूदनम् ॥ ११
आरक्तं कमलं मध्ये वाह्यपत्राणि तद्बहिः । सिता तु वीथिका कार्या द्वाराणि तु यथेच्छया ॥
कर्णिका पीतवर्णा स्यात्केसराणि तथा पुनः । मण्डलं विघ्नमर्दाख्यं मध्ये गणपतिं यजेत् ॥ १३
नामार्धं सघराकं स्याद्देवाच्छकसमन्वितम् । शिरोङ्गं तत्पुरुषेण उमार्धं च नमोन्तकम् ॥ १४
गजाख्यं गजशीर्षं च गाङ्गेयं गणनायकम् । त्रिरावर्तं गगनगं गोपतिं पूर्वपङ्क्तिगम् ॥ १५
विचित्रांसं महाकायं लम्बोष्ठं लम्बकर्णकम् । लम्बोदरं महाभागं विकृतं पार्वतीप्रियम् ॥ १६
भयावहं च भद्रं च भगणं भयसूदनम् । द्वादशैते दशपङ्क्तौ देवत्रासं च पश्चिमे ॥ १७
महानादं भासुरं च विघ्नराजं गणाधिपम् । उद्भटस्वनशुण्डौ च महाशुण्डं च भीमकम् ॥ १८
मन्मथं मधुसूदं च सुन्दरं भावपुष्टकम् । सौम्ये ब्रह्मेश्वरं ब्राह्मं मनोहर्त्ति च संलयम् ॥ १९
लम्पं तूर्यंप्रियं लौल्यं विकर्णं वत्सलं तथा । कृतान्तं कालदण्डं च यजेत्कुम्भं च पूर्ववत् ॥ २०
अयुतं च जपेन्मन्त्रं होमयेत्तु दशांशतः । शेषाणां तु दशाहुत्या जपाद्धोमं तु कारयेत् ॥ २१
पूर्णां दत्त्वाऽभिषेकं तु कुर्यात्सर्वं तु सिध्यति । भूगोश्वगजरत्नाद्यैर्गुरुपूजा परेश्वरः ॥ २२

इत्यादिमहापुराणे आग्नेये गणपूजाविधानकथनं नामाष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९६०६

---

अथैकोनविंशत्यधिकत्रिशततमोऽध्यायः ।

---

वागीश्वरीपूजा ।

ईश्वर उवाच—
वागीश्वरीपूजनं च प्रवक्ष्यामि समण्डलम् । ईश्वरं कालसंयुक्तं मनुं वर्णसमायुतम् ॥ १
निपात्य ईश्वरं कार्यं मनुना चन्द्रसूर्यवत् । अक्षरं न हि देयं स्याद्ध्यायेत्कुन्देन्दुसंनिभाम् ॥ २
पञ्चाशद्वर्णमालां तु मुक्तास्रग्दामभूषिताम् । वरदाभयाक्षसूत्रपुस्तकाढ्यां त्रिलोचनाम् ॥ ३

---

१ ख. ग. उरक । च. ऊहूक । २ क. ड. 'प्रवाद्पूर्वं स्फुरद्वयम्' । ३ क. ड. चटुछन्दं । ४ ग. प्रवमु' । ५ घ. यमेति । ६ क. ड. तत्रो दद्यः प्र' । ७ क. ड. तुर्यामे । ८ क. ड. 'च गन्धनार्थं वर्गो' । ९ ख. ग. 'दं तत्पुट' । १० ख. ग. भक्तप्रियं ।

लक्षं जपेन्मन्त्रकांस्तु कादान्तं वर्णमालिकाम् । अकारादिक्षकारान्ता विसर्गेण पालयन्स्मरेत् ॥ ४
कुर्याद्गुरुश्च दीक्षार्थं मण्डपाद्धे तु मण्डलम् । तुर्याश्रबिन्दुभक्तं तु भागाभ्यां कमलं हितम् ॥ ५
वीथिका पदिका कार्या पद्मान्यष्टौ चतुष्पदे । वीथिका पट्टिका बाह्ये द्वाराणि द्विपदानि तु ॥ ६
उपद्वाराणि तद्वच्च कोणबाह्ये द्विपट्टिकम् । सितानि नव पद्मानि कर्णिका कनकप्रभा ॥ ७
केसराणि विचित्राणि कोणान्रक्तेन पूरयेत् । व्योमरेखान्तरं कृष्णं द्वाराणीन्द्रेभमानतः ॥ ८
मध्ये सरस्वती पद्मे वागीशी पूर्वपत्रके । हृल्लेखा चित्रवागीशी गायत्री विश्वरूपया ॥ ९
शांकरी मतिर्धृतिश्च पूर्वाद्या ह्रीं स्वबीजकाः । ध्येया सरस्वतीवच्च कपिलाज्येन होमकः ॥ १०
संस्कृतप्राकृतकविः काव्यशास्त्रादिविद्भवेत् ॥ ११

इत्याग्नेये महापुराणे वागीश्वरीपूजादिकथनं नामैकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९३७

---

अथ विंशत्यधिकत्रिशततमोऽध्यायः ।

---

मण्डलानि ।

ईश्वर उवाच—

सर्वतोभद्रकान्यष्ट मण्डलानि वदे गुह । शङ्कुना साधयेत्प्राचीमिष्टायां विषुवे सुधीः ॥ १
चित्रास्वात्यन्तरेणाथ हस्तसूत्रेण वा पुनः । पूर्वापरायतं सूत्रमास्फाल्य मध्यतोऽङ्कयेत् ॥ २
कोटिद्वयं तु तन्मध्याद्दक्षिणोत्तरम् । मत्स्यद्वयं प्रकर्तव्यं स्फालयेद्दक्षिणोत्तरम् ॥ ३
शतक्षेत्रार्धमानेन कोणसंपातमादिशेत् । एवं सूत्रचतुष्कस्य स्फालनाच्चतुरस्रकम् ॥ ४
जायते तत्र कर्तव्यं भद्रं वेदकरं शुभम् । वसुभक्तेन्दुद्विपदे क्षेत्रे वीथी च भागिका ॥ ५
द्वारं द्विपदिकं पद्ममानाद्धि सकपोलकम् । कोणबन्धविचित्रं तु द्विपदं तत्र वर्तयेत् ॥ ६
शुक्लं पद्मं कर्णिका तु पीता चित्रं तु केसरम् । रक्ता वीथी तत्र कल्प्या द्वारं लोकेशरूपकम् ॥ ७
रक्तकोणं विधौ नित्ये नैमित्तिकेऽब्जकं शृणु । असंसक्तं तु संसक्तं द्विधाऽब्जं भुक्तिमुक्तिकृत् ८
असंसक्तं मुमुक्षूणां संसक्तं त्रिविधा पृथक् । बालो युवा च वृद्धश्च नामतः फलसिद्धिदाः ॥ ९
पद्मक्षेत्रे तु सूत्राणि दिग्विदिक्षु विनिक्षिपेत् । वृत्तानि पञ्चकल्प्यानि पद्मक्षेत्रसमानि तु ॥ १०
प्रथमे कर्णिका तत्र पुष्करैर्नवभिर्युता । केसराणि चतुर्विंशद्द्वितीयेऽथ तृतीयके ॥ ११
दलसंधिर्गजकुम्भनिभान्तर्वर्तुलाग्रकम् । पञ्चमे व्योमरूपं तु संसक्तं कमलं स्मृतम् ॥ १२
असंसक्ते दलाग्रे तु दिग्भागैर्विस्तराद्भजेत् । भागद्वयपरित्यागाद्धस्तवंशैर्वर्तयेद्दलम् ॥ १३
संधिविस्तारसूत्रेण तन्मानाद्भ्रामयेद्दलम् । सव्यासव्यक्रमेणैवं वर्धयेच्चन्द्रवत्तथा ॥ १४
अथ वा संधिमध्यात्तु भ्रामयेदर्धचन्द्रवत् । संधिद्वयाग्रसूत्रं वा बालपद्मं तदा भवेत् ॥ १५

---

१ ग. °क्षपरश्चान्त्या स्वच्छान्त । २ क. ङ. °न्ती भाविर° । छ. °न्ती माहव° । ३ ग. शाकम्भरी । ४ क. ङ. °पद्मा° । ५ ग. ङ. घ. दृष्टे । ६ ख. ङ. च वात्स्यद्वय । ७ क. ङ. °म् । क्षात° । ख. ग. °म् । गर्ध° । ८ क. ङ. नर्तयेत् । ९ ख. ग. रक्तकार्णं । १० ख. ग. दृश्याणि । ११ क. ख. ग. °द्रवेत् । १२ ख. °न्मात्राद्धक्षालयं° । १३ ग. च. °वेष्कुल° । १४ क. ङ. च °व गुद्धे नन्द° ।

संधिसूत्रार्धमानेन पृष्ठतः परिवर्तयेत् । तीक्ष्णाग्रं तन्तुभावेन कमलं भुक्तिमुक्तिदम् ॥ १६
मुक्तौ वृत्तं च वश्यादौ बालं पद्मं समानकम् । नवनाभं नवहस्तं भागैर्मन्त्रात्मकैश्च तत् ॥ १७
मध्येऽब्जं पट्टिकावीथीद्वारेणाब्जस्य मानतः । कण्ठोपकण्ठयुक्तानि तद्बाह्ये वीथिका मता ॥ १८
पञ्चभागान्विता सा तु समन्ताद्दशभागिका । दिग्विदिक्ष्वष्ट पद्मानि द्वारपद्मं सवीथिकम् ॥ १९
तद्बाह्ये पञ्चपदिका वीथिका यत्र भूषिता । पद्मवद्द्वारकण्ठस्तु पदिकं चाष्टकण्ठकम् ॥ २०
कपोलं पदिकं कार्यं दिक्षु द्वारत्रयं स्फुटम् । कोणबन्धं त्रिपट्टं तु द्विपदं वज्रवद्भवेत् ॥ २१
मध्ये तु कमलं शुक्लं पीतं रक्तं च नीलकम् । पीतं शुक्लं च धूम्रं च रक्तं पीतं च मुक्तिदम् ॥२२
पूर्वादौ कमलान्यष्ट शिवविष्ण्वादिकं यजेत् । मासादमध्यतोऽभ्यर्च्य शक्रादीनब्जकादिषु ॥२३
अस्त्राणि बाह्यवीथ्यां तु विष्ण्वादीनश्वमेधभाक् । पवित्रारोहणादौ च महामण्डलमालिखेत् ॥२४
अष्टहस्ते पुरा क्षेत्रं रसपक्षैर्विवर्तयेत् । द्विपदं कमलं मध्ये वीथिका पदिका ततः ॥ २५
दिग्विदिक्षु ततोऽष्टौ च नीलाब्जानि विवर्तयेत् । मध्यपद्मप्रमाणेन विवरस्थानि तानि तु ॥२६
दलसंधिविहीनानि नीलेन्दीवरकाणि च । तत्पृष्ठे पदिका वीथी ( *स्वस्तिकानि तद्बहिः ॥२७
द्विपदानि तथा चाष्टौ कृतभागकृतानि तु । वर्तयेत्स्वस्तिकांस्तत्र वीथिका पूर्ववद्बहिः ॥ २८
द्वाराणि कमलं यद्वदुपकण्ठयुतानि तु । रक्तं कोणं पीतवीथी ) नलं पद्मं च मण्डले ॥ २९
स्वस्तिकादि विचित्रं च सर्वकामप्रदं शुभम् । पञ्चाब्जं पञ्चहस्तं स्यात्समन्ताद्दशभाजितम् ॥ ३०
द्विपदं कमलं वीथी पट्टिका दिक्षु पङ्कजम् । चतुष्कं पृष्ठतो वीथी पदिका द्विपदाऽन्यथा ॥ ३१
कण्ठोपकण्ठयुक्तानि द्वाराण्यब्जं तु मध्यतः । पद्माब्जमण्डले शस्तं सितं पीतं च पूर्वकम् ॥ ३२
वैदू(डू)र्याभं दक्षिणाब्जं कुन्दाभं वारुणं कजम् । उत्तराब्जं तु शङ्खाभमन्यत्सर्वं विचित्रकम् ३३
सर्वकामप्रदं वक्ष्ये दशहस्तं तु मण्डलम् । विकारभक्तं तुर्यांसं द्वारं तु द्विपदं भवेत् ॥ ३४
मध्ये पद्मं पूर्ववच्च विघ्नध्वंसं वदाम्यथ । चतुर्हस्तं पुरं कृत्वा वृत्तं चैव करद्वयम् ॥ ३५
वीथिका हस्तमात्रा तु स्वस्तिकैर्बहुभिर्वृता । हस्तमात्राणि द्वाराणि दिक्षु वृत्तं सपद्मकम् ॥ ३६
पद्मानि पञ्च शुक्लानि मध्ये पूज्यश्च निष्कलः । हृदयादीनि पूर्वादौ विदिक्ष्वस्त्राणि वै यजेत् ३७
मार्गवत् पञ्च पद्मानि बुद्ध्याधारमतो वदे । शतभागे विधिभागे पद्मं लिङ्गाष्टकं दिशि ॥ ३८
मेखलाभागसंयुक्तं कण्ठं द्विपदिकं भवेत् । आचार्यो बुद्धिमाश्रित्य कल्पयेच्च लतादिकम् ॥ ३९
चतुः पद् पञ्चमाष्टादि खाक्षिखाग्न्यादि मण्डलम् । खाक्षीन्दुसूर्यगं सर्वं खाक्षिवेदेन्दुवर्णनात् ४०
चत्वारिंशत्साधिकानि चतुर्दशशतानि हि । मण्डलानि हरेः शंभोर्देव्याः सूर्यस्य सन्ति च ॥ ४१
दश सप्त विभक्ते तु लतालिङ्गोद्भवं शृणु । दिक्षु पञ्च त्रयं चैकं त्रयं पञ्च च लोपयेत् ॥ ४२
ऊर्ध्वगे द्विपदे लिङ्गं मन्दिरं पार्श्वकोष्ठयोः । मध्ये न द्विपदं पद्मवच्चैकं च पङ्कजम् ॥ ४३
लिङ्गस्य पार्श्वयोर्भद्रे पदद्वारमलोपनात् । तत्पार्श्वशोभाः षड्लोप्य लताः क्षेपास्तथा हरेः ॥४५
ऊर्ध्वं द्विपदिकं लोप्यं हरेर्भद्राष्टकं स्मृतम् । रश्मिमालासमायुक्तं चेद्रलोपाच्च शोभिकम् ॥ ४६

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

१ क. ङ. 'मध्ये त्रिपादं तु त्रिपं' । २ क. ङ. 'च नवनवानि मध्याधरात्' । ३ ख. 'लिङ्गभांगे' । ४ ख. ग. 'षड् लक्षणा' । ५ क. ङ. 'खाक्षीन्दुसूर्यं सर्वं खाक्षिवेदेन्दु' । ६ ङ. 'खाक्षिवेदे' । ७ क. ङ. 'त च दिक्षु ऊ' । ८ क. ङ. न च पद् पद्मवच्चैकमद्वात्रिंशत् । 'ङि' । ९ क. ङ. 'शंभोर्देव्याश्च' । १० ख. ग. 'च लोपयेत्' । ११ क. ङ. 'लोपाच्च' । १२ क. ङ. शोभिका । ख. ग. शोभितम् ।

पञ्चविंशतिभिः पद्मं ततः पीठमपीठकम् । द्वयं द्वयं रसयित्वा उपशोभास्तथाऽष्ट च ॥ ४६
द्व्यंपादिरव्यापकं भद्रं वृत्तमध्ये परं लघु । मध्ये नवपदं पद्मं कोणे भद्रचतुष्टयम् ॥ ४७
त्रयोदशपदं शेषं बुद्ध्याधारस्तु मण्डलम् । शतपत्रं षष्ठ्यधिकं बुद्ध्याधारं हरादिषु ॥ ४८

इत्यादिमहापुराण आग्नेये मण्डलविधानकथनं नाम विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९६९

---

अथैकविंशत्यधिकत्रिशततमोऽध्यायः ।

---

अघोरास्त्रादिशान्तिकल्पः ।

ईश्वर उवाच—

अस्त्रयागः पुरा कार्यः सर्वकर्मसु सिद्धिदः । मध्ये पूज्यं शिवास्त्रं वज्रादीन्पूर्वतः क्रमात् ॥ १
पञ्चवक्त्रं दशकरं रणादौ पूजितं जये । (*ग्रहपूजा रविर्मध्ये पूर्वाद्याः सोमकादयः ॥ २
सर्वे एकादशस्थास्तु ग्रहाः स्युर्ग्रहपूजनात् । अस्त्रशान्तिं प्रवक्ष्यामि सर्वोत्पातविनाशिनीम् ॥) ३
ग्रहरोगादिशमनीं मारीशत्रुविमर्दिनीम् )। विनायकोपतापघ्नीमघोरास्त्रं जपेन्नरः ॥ ४
लक्षं ग्रहादिनाशः स्यादुत्पाते तिलहोमतः । दिव्ये लक्षं तदर्धेन व्योमजोत्पातनाशनम् ॥ ५
घृतेन लक्षपातेन उत्पाते भूमिजे हितम् । घृतगुग्गुलुहोमे च सर्वोत्पातादिमर्दनम् ॥ ६
दूर्वाक्षताज्यहोमेन व्याधयोऽथ घृतेन च । सहस्रेण तु दुःस्वप्ना विनश्यन्ति न संशयः ॥ ७
अयुताद्ग्रहदोषघ्नो यवाद्घृतविमिश्रितात् । विनायकार्तिशमनमयुतेन घृतस्य च ॥ ८
भूतवेतालशान्तिस्तु गुग्गुलैरयुतेन च । महावृक्षस्य भङ्गे तु व्यालैकद्धे गृहे स्थिते ॥ ९
अरण्यानां प्रवेशे च दूर्वाज्याक्षतहोमनात् । उल्कापाते भूमिकम्पे तिलाज्येनाऽऽहुताच्छिवम्१०
+रक्तस्रावे तु वृक्षाणामयुताद्गुग्गुलोः शिवम् । अकाले फलपुष्पाणां राष्ट्रभङ्गे च मारणे ॥ ११
द्विपदादेर्यदा मारी लक्षार्धाच्च तिलाज्यतः । हस्तिमारीप्रशान्त्यर्थे करिणीदन्तवर्धने ॥ १२
हस्तिन्यां मदहष्टौ च अयुताच्छान्तिरिष्यते । अकाले गर्भपाते तु जातं यत्र विनश्यति ॥ १३
विकृता यत्र जायन्ते यत्राकालेऽयुतं हुनेत् । तिलाज्यलक्षहोमस्तु उत्तमा(मः)सिद्धिसाधने ॥१४
मध्यमायां तदर्धेन तत्पादादधमासु च । यथा जपस्तथा होमः सङ्ग्रामे विजयो भवेत् ॥ १५
अघोरास्त्रं जपेद्यस्य ध्यात्वा पञ्चास्यपूजितम् ॥ १६

इत्यादिमहापुराण आग्नेयेऽघोरास्त्रादिशान्तिविधानकथनं नामैकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९८१

---

* धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति । + इदमर्धं नास्ति क. ख. पुस्तकयोः ।

---

१ क. ख. पीठं । २ क. ख. 'ध्ये मध्यत' । ३ क. ख. घ. शतपत्रं । ४ क. ख. 'घोराः । ५ क. ख. जपेत् । ६ क. ख. दिव्ये । ७ क. ख. 'गुल्गुलु' । ८ क. ख. 'लस्रादेष्टं' । ९ क. ख. प्रवेशे । १० क. ख. 'मांज्यघृतहोमात् । उ' । ११ क. ख. 'मायवसनात्के' । १२ क. ख. यजेत् । १३ क. ख. 'मायक' । १४ घ. ङ. 'न उत्पा' ।

अथ द्वाविंशत्यधिकत्रिशततमोऽध्यायः ।

---

पाशुपतशान्तिः ।

ईश्वर उवाच—

वक्ष्ये पाशुपतास्त्रेण शान्तिजाप्यादि पूर्ववत् । पादतः पूर्वमन्त्रो हि फडन्तं चाऽऽपदादिनुत् ॥ १
ॐ नमो भगवते महापाशुपतायातुलबलवीर्यपराक्रमाय त्रिपञ्चनयनाय नानारूपाय नानाप्रहरणोद्यताय सर्वाङ्गरक्ताय भिन्नाञ्जनचयप्रख्याय श्मशानवेतालप्रियाय सर्वविघ्ननिकृन्तनरताय सर्वसिद्धिप्रदाय भक्तानुकम्पिनेऽसंख्यवक्त्रभुजपादाय तस्मिन्सिद्धाय वेतालवित्रासिने शाकिनीक्षोभजनकाय व्याधिनिग्रहकारिणे (*पापभञ्जनाय सूर्यसोमाग्निनेत्राय विष्णुकवचाय खड्गवज्रहस्ताय यमदण्डवरुणपाशाय रुद्रशूलाय ज्वलज्जिह्वाय सर्वरोगविद्रावणाय ग्रहनिग्रहकारिणे ) दुष्टनागक्षयकारिणे, ॐ कृष्णपिङ्गलाय फट्, कूराय फट्, वज्रहस्ताय फट्, शक्तये फट्, दण्डाय फट्, (+यमाय फट्, खड्गाय फट्, नैर्ऋताय फट्, वरुणाय फट्, †वज्राय फट्, पाशाय फट्, ध्वजाय फट्, अङ्कुशाय फट्, गदायै फट्, कुबेराय फट्, त्रिशूलाय फट्, ) मुद्गराय फट्, चक्राय फट्, पद्माय फट्, नागास्त्राय फट्, ईशानाय फट्, खेटकास्त्राय फट्, मुण्डाय फट्, मुण्डास्त्राय फट्, कङ्कालास्त्राय फट्, पिच्छिकास्त्राय फट्, क्षुरिकास्त्राय फट्, ब्रह्मास्त्राय फट्, शक्त्यस्त्राय फट्, गणास्त्राय फट्, सिद्धास्त्राय फट्, पिलिपिच्छास्त्राय फट्, गन्धर्वास्त्राय फट्, पूर्वास्त्राय फट्, दक्षिणास्त्राय फट्, वामास्त्राय फट्, पश्चिमास्त्राय फट्, मन्त्रास्त्राय फट्, शाकिन्यस्त्राय फट्, योगिन्यस्त्राय फट्, दण्डास्त्राय फट्, नमोऽस्त्राय फट्, शिवास्त्राय फट्, ईशानास्त्राय फट्, महादण्डास्त्राय फट्, नागास्त्राय फट्, पुरुषास्त्राय फट्, अघोरास्त्राय फट्, वामदेवास्त्राय फट्, सद्योजातास्त्राय फट्, हृदयास्त्राय फट्, (×महास्त्राय फट्, गरुडास्त्राय फट्, राक्षसास्त्राय फट्, दानवास्त्राय फट्, क्षौं नरसिंहास्त्राय फट्, त्वष्ट्रस्त्राय फट्, सर्वास्त्राय फट्[१], ) =लः फट्, नः फट्, (§भः फट्, पः फट्, मः फट्, [२]श्र फट्, हैं फट्, भूः फट्, भुवः फट्, स्वः फट्, महः फट्, जनः फट्, तपः फट्, सत्यं फट्, सर्वलोक फट्, सर्वपाताल फट्, सर्वतत्त्व फट्, सर्वप्राण फट्, सर्वनाडी फट्, सर्वकारण फट्, सर्वदेव फट्, ह्रीं फट्, श्रीं फट्, ह्रूं फट्, स्रूं फट्, आं फट्, लां फट्, वैराग्याय फट्¶ ) मायास्त्राय फट्, कामास्त्राय फट्, क्षेत्रपालास्त्राय फट्[३], हुंकारास्त्राय फट्, भास्करास्त्राय फट्, चन्द्रास्त्राय फट्, विघ्नेश्वरास्त्राय फट्, गौः, गां फट्, स्त्रों स्त्रौं फट्, हौं हौं फट्, भ्रामय भ्रामय फट्, संतापय संतापय फट्, छादय च्छादय फट्, उन्मूलयोन्मूलय फट्, त्रासय त्रासय फट्, संजीवय संजीवय फट्, विद्रावय विद्रावय फट्, सर्वदुरितं नाशय नाशय फट्, ।

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. ङ. पुस्तकयोर्नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके नास्ति । † इदं पदद्वयं नास्ति ग. पुस्तके । × धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके नास्ति । = एतदादि भुवः फडित्यन्तग्रन्थस्थाने क. ङ. पुस्तकयोरेव ग्रन्थो वर्तते—"अः फट्, [illegible] फट्, मः फट्, श्रीं फट्, अ फट्" इति । § धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति । ¶ एतत्पुरतोऽधिक ध. पुस्तके यथा—"कः फट्, चः फट्" इति ।

---

१ क. ङ. त्रिमन्त्राय । २ छ. ˚र, नः फट्, नः फट्, पः । ३ घ. लं । ४ ख. ङ. । ॐ क्षों । ५ घ. ह्रीं ।

संकृदावर्तनादेव सर्वविघ्नान्विनाशयेत् । शतावर्तेनं चोत्पातात्रणादौ विजयो भवेत् ॥ २
घृतगुग्गुलुहोमाच्च असाध्यानपि साधयेत् । पठनात्सर्वशान्तिः स्यादाशु पाशुपतस्य च ॥ ३

इत्याग्निमहापुराणे आग्नेये पाशुपतशान्तिकथनं नाम द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९५८४

---

अथ त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ।

---

षडङ्गान्यघोरास्त्राणि ।

ईश्वर उवाच—
ओं हूंलं स इति मन्त्रेण मृत्युरोगादि शाम्यति । लक्षाहुतिभिर्दूर्वाभिः शान्तिं पुष्टिं समासाधयेत्॥ १
अथ वा प्रणवेनैव मायया वा षडानन । दिव्यान्तरिक्षभौमानां शान्तिरुत्पातहृत्सके ॥ २
ॐ नमो भगवति गङ्गे कालि कालि महाकालि महाकालि मांसशोणितभोजने रक्तकृष्णमुखि वशमानय मानुषान् स्वाहा ॥ ३
ॐ लक्षं जप्त्वा दशांशेन हुत्वा स्यात्सर्वकर्मकृत् । वशं नयति शक्रादीन्मनुष्येष्वेषु का कथा॥ ४
अन्तर्धानकरी विद्या मोहनी जृम्भनी तथा । वशं नयति शत्रूणां शत्रुबुद्धिप्रमोहिनी ॥ ५
कामधेनुरियं विद्या सप्तधा परिकीर्तिता । मन्त्रराजं प्रवक्ष्यामि शत्रुचौरादिमोहनम् ॥ ६
महाभयेषु सर्वेषु स्मर्तव्यं हरपूजितम् । लक्षं जप्त्वा तिलैर्होमः सिध्येदुद्धारकं शृणु ॥ ७
ॐ हले शूले एहि ब्रह्मसत्येन (*विष्णुसत्येन रुद्रसत्येन ) रक्ष मां वाचेश्वराय स्वाहा ॥ ८
दुर्गाचारपते यस्मात्तेन दुर्गा शिवा मता ॥ ९
ॐ ह्रीं चण्डकपालिनि दन्तान्किटि किटि क्षिटि क्षिटि मुखे भाम् ॥ १०
अनेन मन्त्रराजेन क्षालयित्वा तु तण्डुलान् । त्रिशद्वाराणि जप्तानि तच्चौरेषु प्रदापयेत् ॥ ११
दन्तैश्चूर्णानि शुक्लानि पतितानि हि शुद्धये ॥ १२
ॐ ज्वललोचन कपिलजटाभारभास्वर विद्रावण त्रैलोक्य डामर डामर दर दर भ्रम भ्रमाऽऽकृष्टाऽऽकृष्ट तोटय तोटय मोटय मोटय[13] दह दह पच पच, एवं सिद्धिरुद्रो ज्ञापयति 'यदि ग्रहोपगतः स्वर्गलोकं देवलोकं वाऽऽरामविहाराचलं तथाऽपि तमावर्तयिष्यामि बलिं 'गृह्ण गृह्ण ददामि ते स्वाहेति ॥ १३
क्षेत्रपालबलिं दत्त्वा ग्रहो न्यासोऽड्गुदन्त्यजेत् । ग्रहचो नाशमायान्ति रणे[15] वैरगणक्षयः ॥ १४
हंसबीजं तु विन्यस्य विषं तु निर्विषं हरेत् । अगरु चन्दनं कुष्ठं कुङ्कुमं नागकेसरम् ॥ १५

---

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. पुस्तकयोः । विष्णुरुद्रसत्येनेति ख. ग. पुस्तकयोः ।

---

१ घ. ग. तदूपाय° । २ घ. ङ. °र्ते महारत्ना° । ३ ख. ङ. स्यादसाध्या° । ४ क. ङ. ओं ह्र, इ° । ग ओं ह्रं हं ष इ° । घ. ओं हु ष इ° । ५ ख. हूं ह म । ६ ग. °त्युरोगादि । ७ घ. ङ. °याय स्वाहा । ८ क. ङ. हरिपूजनम् । ख. हरपूजनम् । ९ क. ख. ग. °सिद्धिर° । १० ख. ह्रीं किटि किटि क्षिटि क्षिटि मुखे फट्, हुं मृ । ११ क. ङ. °र भ्राम भ्रामाऽऽ° । १२ क. ङ. °इ त्रोटय त्रोटय मो° । १३ क. ङ. °य हन हन प° । १४ घ. °ग्रहोद्दंष्ट्र मत्र° । १५ क. ङ. °वे पत° । घ. वैरिणं° ।

ं वै देवदारुं च समं कृत्वाऽथ धूपकः । माक्षिकेण समायुक्तो देवत्रस्तादिधूपनात् ॥ १६
वादे मोहने स्त्रीणां मण्डने कलहे शुभः । कन्याया वरणे भाग्ये मायापक्षेण मक्षितः ॥ १७
रोचना नागपुष्पाणि कुङ्कुमं च मनःशिला । ललाटे तिलकं कृत्वा यं पश्येत्स वशी भवेत्
ावर्यास्तु चूर्णं तु दुग्धपीतं च पुत्रकृत् । नागकेशरचूर्णं तु घृतपक्वं तु पुत्रकृत् ॥ १९
लाशबीजपानेन लभते पुत्रकं तथा ॥ २०
मुत्तिष्ठ चामुण्डे जम्भय जम्भय मोहय मोहयामुकं वशमानय वशमानय स्वाहा ॥ २१
ंविंशा सिद्धविद्या सा नदीतीरमृदा स्त्रियम् । कृत्वोन्मत्तरसेनैव नामाऽऽलिख्यार्कपत्रके २२
ोत्सर्गं ततः कृत्वा जपेच्चामानयेत्स्त्रियम् ॥ २३
ं धुं सः वषट् ॥ २४
ामृत्युंजयो मन्त्रो जप्याद्धोमाच्च पुष्टिकृत् ॥ २५
ं हुं सः, हूं, हूं मः, हः, सौं स्कौः ॥ २६
ासंजीविनी विद्या अष्टार्णा जयकृद्रणे । पञ्च ईशानमुख्याश्च धर्मकामादिदायकाः ॥ २७
ानः सर्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्मणोऽधिपतिर्ब्रह्म शिवो मेऽस्तु सदाशिवः ॥ २
ं तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २९
मघोरेभ्योऽथ घोरेभ्यो घोरतरेभ्यस्तु सर्वतः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः
ं वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय
ो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः । सर्वभूतदमनाय नमो मनो-
नाय नमः ॥ ३१
सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवे भवे नातिभवे भजस्व मां भवोद्भवाय नमः
ामस्त्राङ्गपट्कं च वक्ष्येऽहं भुक्तिमुक्तिदम् ॥ ३३
नमः परमात्मने पराय कामदाय परमेश्वराय योगाय योगसंभवाय सर्वकराय कुरु कुरु
ाय सद्य भव भव भवोद्भव वामदेव सर्वकार्यकर पापप्रशमन सदाशिव प्रसन्न नमोऽस्तु
स्वाहा ॥ ३४
ं सर्वार्थदं तु सप्तत्यक्षरसंयुतम् ॥ ३५
ं शिव शिवाय नमः शिरः, ॐ शिव हृदये ज्वालिनि स्वाहा शिखा, ॐ शिवात्मक महातेजः
ा प्रभु संवर्तय महाघोरकवच पिङ्गल[१], नमः । महाकवच शिवाज्ञया हृदयं बन्ध घर्णय
ूर्णय पूर्णय चूर्णय चूर्णय सूक्ष्मासूक्ष्मवज्रधर वज्रपाशधर वज्रशरीर मेऽच्छरीरमनुप्रविश्य
ादुष्टान्स्तम्भय स्तम्भय हूँ फट् ॥ ३६

---

* सद्य सद्येति नास्ति क ड. पुस्तकयोः । † एतत्परतः—" आधादि विद्यकः " इत्यधिकं क. ड. पुस्त-
ः । + धनुर्विद्यान्तर्गतमन्त्रः क. ड. च. पुस्तकेषु नास्ति ।

---

१ क. ख. देवदारु । २ क. ड. पुत्रकृत् । ३ क. ड. घृतपीत । ४ क. ड. ख्योन्मत्तर । ५ ख, ग. ओं हुं
सौ स्कोः, मृ । ख. ओं य हूं ह फः सौ स्कौः, मृ । ६ ग. हू य, ह, । ७ क. ड. धर्मकामार्थ । ८ क.
सर्वकराय । ख. ग. सर्वकराय । ९ क. ड. ज्वालनिक । ख. ज्वालिनि । १० क. ड. च. ॐ भवद्भवद्भव क
। ग. ॐ पूर्णय पूर्णय तु । ११ ग. मनुप्रविश्य । १२ ग. हूं ।

अक्षराणां तु कवचं स्मृतं पञ्चाक्षराधिकम् ॥ १७
ओमोजसे नेत्रम् , ॐ स्फुर स्फुर तनुरूप तनुरूप) चट चट प्रचट प्रचट कट कट घम घम १८
घातय घातय हूं फट्, अघोरास्त्रम् ॥

इत्यादिमहापुराणे आग्नेये पञ्चाघोरास्त्रकथनं नाम त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९६२१

---

अथ चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ।

---

रुद्रशान्तिः ।

ईश्वर उवाच—

शिवशान्तिं प्रवक्ष्यामि कल्पाघोरप्रपूर्वकम् । सप्तकोट्यधिपो घोरा(रो) ब्रह्महत्याद्यपार्दनः ॥ १
उत्तमाधमसिद्धीनामालयोऽखिलरोगनुत् । दिव्यान्तरी(रि)क्षभौमानामुत्पातानां विमर्दनः ॥ २
विषग्रहपिशाचानां ग्रसनः सर्वकामकृत् । मायश्चित्तमघो(घौ)घार्तौ दौर्भाग्यार्तिविनाशनम् ॥ ३
एकवीरं तु विन्यस्य ध्येयः पञ्चमुखः सदा । शान्तिके पौष्टिके शुक्लो रक्तो वश्येऽथ पीतकः ॥४
स्तम्भने धूम्र उच्चाटमारणे कृष्णवर्णकः । कर्षणे कपिलो मोहे द्वात्रिंशद्वर्णमर्चयेत् ॥ ५
त्रिंशल्लक्षं जपेन्मन्त्रं होमं कुर्याद्दशांशतः । गुग्गुलघृतयुक्तेन सिद्धे सिद्धार्थसर्वकृत् ॥ ६
अघोरास्त्रापरो मन्त्रो विद्यते भुक्तिमुक्तिकृत् । अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत् ७
अघोरास्त्रमघोरस्तु द्वाविमौ मन्त्रराजकौ । जपहोमार्चनाद्युद्धे शत्रुसैन्यं विमर्दयेत् ॥ ८
रुद्रशान्तिं प्रवक्ष्यामि शिवां सर्वार्थसाधनीम् । पुत्रार्थं ग्रहनाशार्थं विषव्याधिविनष्टये ॥ ९
दुर्भिक्षमारीशान्त्यर्थं दुःस्वप्नहरणाय च । बलादिराज्यप्राप्त्यर्थं रिपूणां नाशनाय च ॥ १०
अकाले फलिते वृक्षे सर्वग्रहविमर्दने । पूजने तु नमस्कारः स्वाहान्ते हवनं तथा ॥ ११
आप्यायने वषट्कारं पुष्टौ वौषण्नियोजयेत् । चकारहितपस्थाने जातियोगं तु कारयेत् ॥ १२
ॐ रुद्राय च, ॐ वृषभाय नमोऽविमुक्तायासंभवाय पुरुषाय पञ्चपूज्याय ईशपुत्रे पौरुषे पश्चे
पञ्चोत्तरे विश्वरूपाय करालाय विकृतरूपाय, (+अविकृतरूपाय) ॥ १३
निकृती चापरे काले अप्सु माया च नैर्ऋते ॥ १४
एकपिङ्गलाय श्वेतपिङ्गलाय कृष्णपिङ्गलाय नमः ॥ १५
मधुपिङ्गलाय निपतावनन्तायाऽऽर्द्राय शुष्काय पयोगणाय कालतत्त्वे करालाय विकरालाय ह्रीं
मायातत्त्वे सहस्रशीर्षाय सहस्रवक्त्राय *सहस्रैकरचरणाय सहस्रलिङ्गाय ॥ १६
विद्यातत्त्वे सहस्राक्षाद्भिन्नसेद्दक्षिणे दले ॥ १७

+ धनुश्चिह्नान्तर्गतं नास्ति क. ख. ग. ङ. पुस्तकेषु । * इद पद नास्ति ख ग. पुस्तकयोः ।

१ ख. ग अरणार्थद' । २ क ङ. च हुम् । ३ क. ङ. गुग्गुल घृतसयुक्त सि' । ४ छ. सिद्धोऽसिद्धोऽर्थ' । ५ क. ङ. 'ज्यशिष्यर्थे । ६ क ङ. 'हान्तो हवने मनुः । आ० । छ. हान्तो हवने तथा । आ० । ७ ख. 'व । औका' । क. ङ. 'द । दका' । ८ ग. यातियोग । ९ क. ङ. 'य नम', ॐ । छ. 'य च चे ॐ । १० क. ङ. 'काय स' । ११ क. ङ 'य च गुर्याय । छ. 'य च पु' । १२ ख. ईशपत्रे । छ. ईशानाय । १३ छ. पौरुषाय । १४ छ. 'व चोत्त' । १५ क. ङ. च. नियती । १६ क. ङ. कृष्णपिङ्गलाय । १७ छ. 'मः । मधुपिङ्गलाय नमः, ग' । १८ ख. ग. निपातिताय । १९ क. ङ. सहस्रकिरणाय ।

( रुद्रशान्तिविधानम् )

एकजटाय द्विजटाय त्रिजटाय स्वाहाकाराय स्वधाकाराय वषट्काराय षड्रुद्राय ॥ १८
ईशतत्त्वे तु वह्निपत्रे स्थिता गुह ॥ १९
भूपतये[2] *पशुपतये उमापतये कालाधिपतये ॥ २०
सदाशिवाख्यतत्त्वे षट् पूज्याः पूर्वदले स्थिताः ॥ २१
उमायैकरूपधारिणि,[3] ॐ कुरु कुरु रुहिणि रुहिणि रुद्रोऽसि देवानां देव देव विशाख हन हन
दह दह पच पच मथ मथ तुरु तुरु, अरु, अर्रु मुरु मुरु रुद्रशान्तिमनुस्मर कृष्णपिङ्गल, अका- २२
लपिशाचाधिपतिविश्वेश्वराय नमः ॥ २३
शिवतत्त्वे कर्णिकायां पूज्यौ ह्युमामहेश्वरौ ॥
ॐ व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवायानन्ताय +नाथायानाश्रिताय शिवाय २४
शिवतत्त्वे नव पदानि व्योमव्याप्यभिधास्य हि ॥
शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहाराय ×नमः । ॐ नमः शिवाय सर्वप्रभवे २५
शिवाय, ईशानमूर्धाय तत्पुरुषाय पञ्चवक्त्राय ॥ २६
नवपदं पूर्वदले सदाख्ये पूजयेद्गुह ॥
अघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तये । ॐ नमो नमः । गुह्यातिगुह्याय गोप्त्रेऽनिधनाय
सर्वयोगाधिकृताय ज्योतीरूपायाग्निमात्रे ईशतत्त्वे निधानतरे तु परमेश्वराय, अचेतना- २७
चेतन व्योमन् व्यापिन(न्) अरूपिन् । प्रमथ तेजस्तेजः ॥ २८
मायातत्त्वे नैर्ऋते तु कालतत्त्वेऽथ वारुणे ॥
ॐ धृ धृ नाना वां वामनिधन निधनोद्भव शिव सर्व परमात्मन् । महादेव सद्भावेश्वर महा-
तेजयोगाधिपते मुञ्च मुञ्च प्रमथ प्रमथ, ॐ सर्व सर्व, ॐ भव भव, ॐ भवोद्भव सर्वभूतसुखप्रद ३०
वायुपत्रेऽथ नियतौ पुरुषे चोत्तरे नव ॥
सर्वसांनिध्यकर ब्रह्मविष्णुरुद्रपरानर्चितास्तुत स्तुत साक्षिन् साक्षिन् तुरु तुरु पतङ्ग पतङ्ग
†पिङ्ग पिङ्ग =ज्ञान ज्ञान शब्द शब्द सूक्ष्म सूक्ष्म शिव शिव सर्वप्रद सर्वप्रद, ॐ नमः ३१
शिवाय, ॐ नमो नमः शिवाय, ॐ नमो नमः ॥ ३२
ईशाने भाकृते तत्त्वे पूजयेज्जुहुयाज्जपेत् । ग्रहरोगादिमायार्तिशमनी सर्वसिद्धिकृत् ॥ ३३॥

इत्यादिमहापुराणे आग्नेये रुद्रशान्तिविधानकथनं नाम चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६५१

---

* इदं पदं नास्ति क. ङ. च. पुस्तकेषु । + इदं पदं नास्ति ख. ग. पुस्तकयोः । × इदं पदं नास्ति क. ङ. च. पुस्तकेषु । † इदं पदद्वयं नास्ति ख. ग. च. पुस्तकेषु । = इदं पदद्वयं नास्ति क. ङ. पुस्तकयोः ।

१ क. ङ. भूतपतये । २ ख. 'ये भूतपतये महाभूतपतये प' । ३ ङ. 'यै कुरु' । ४ ख. ग. च. ॐ तुरु तुरु । ५ ख. ग. 'थ तुरु तुरु, अ' । ६ ख. ग. 'व स्वव स्वव रु' । ७ क. ख. ङ. च. रुका' । ८ छ. 'न्नायाना' । ९ ख. ग. 'न तव । १० ख. ग. 'प्रभावाशि' । ११ ख. ग. ध्यान । १२ छ. 'पादिप' । १३ ख. ग. ॐ नमः । १४ ङ. ङ. ज्योतिरू' । १५ छ. 'त्रे हौनत' । १६ छ. 'यात्रे ह याऽतत्त्वे प' । १७ ख. ग. तु व्यास्यगेरा' । १८ छ. 'य चे' । १९ क. ङ. व्योमन् । २० क. ङ. व्यापिन् । ॰ नास्ति २१ छ. प्रामा । २२ क. ▪ ध ओं नाना ओं वों । २३ क. ङ. 'निधान । २४ छ. प्रमथ प्रमथ, ॐ । २५ ख. ग. पद्मन । २६ ख. ग. 'त सा' । २७ ख. ग. ठह । २८ क. ङ. सर्वद । ख. ग. पद । २९ क. ङ. च. 'पारिन्' ।

अथ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ।

---

अंशकादिः ।

ईश्वर उवाच—

रुद्राक्षकटकं धार्यं विषमं सुसमं दृढम् । एकत्रिपञ्चवदनं यथालाभं तु धारयेत् ॥ १

द्विचतुःषण्मुखं शस्तमव्रणं तीव्रकण्टकम् । दक्षबाहौ शिखादौ च धारयेच्चतुराननम् ॥ २

अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत्(*हैमी वा मुद्रिका धार्या शिवमन्त्रेण चाऽऽर्चयेत्
शिवः शिखा तथा ज्योतिः सावित्रश्चेति गोचराः)। गोचरं तु कुलं ज्ञेयं तेन लक्ष्यस्तु दीक्षितः ४

प्राजापत्यो महीपालः कापोतो ग्रन्थिकः शिवे । कुटिकाश्चैव वेतालाः पद्महंसाः शिखाकुले ॥ ५

धृतराष्ट्रा बकाः काका गोपाला ज्योतिसंज्ञके । कुटिका सौठराश्चैव गुटिका दण्डिनोऽपरे ॥ ६

सावित्री गोचरे चैवमेकैकस्तु चतुर्विधः । सिद्धाद्यंशकमाख्यास्ये येन मन्त्रः सुसिद्धिदः ॥ ७

भूमौ तु मातृका लेख्याः कूटयन्त्रविवर्जिताः । मन्त्राक्षराणि विश्लिष्य अनुस्वारं नयेत्पृथक् ॥ ८

साधकस्य तु या संज्ञा तस्या विश्लेषणं चरेत् । मन्त्रस्याऽऽदौ तथा चान्ते साधकार्णानि योजयेत्
सिद्धः साध्यः सुसिद्धोऽरिः संज्ञातो गणयेत्क्रमात् । मन्त्रस्याऽऽदौ तथा चान्ते सिद्धिदः
स्याच्छतांशतः ॥ १०

सिद्धादिश्चान्तसिद्धिश्च तत्क्षणादेव सिध्यति । सुसिद्धादिः सुसिद्धान्तः सिद्धवत्परिकल्पयेत् ॥

अरिमादौ तथाऽन्ते च दूरतः परिवर्जयेत् । सिद्धः सुसिद्धश्चैकार्थे अरिः साध्यस्तथैव च ॥ १२

आदौ सिद्धः स्थितो मन्त्रस्तदन्ते तद्वदेव हि । मध्ये रिपुसहस्राणि न दोषाय भवन्ति हि ॥ १३

मायाप्रसादप्रणवेनांशकाख्यातमन्त्रके । ब्रह्मांशको ब्रह्मविद्या विष्ण्वंशो वैष्णवः स्मृतः ॥ १४

रुद्रांशको भवेद्वीर इन्द्रांशश्चेश्वरप्रियः । नागांशो नागस्तब्धाक्षो यक्षांशो भूषणप्रियः ॥ १५

गन्धर्वांशोऽतिगीतादि भीमांशो राक्षसांशकः । दैत्यांशः स्याद्युद्धकृच्छ्रीमानी विद्याधरांशकः १६

पिशाचांशो मलाक्रान्तो मन्त्रं दद्यान्निरीक्ष्य च । मन्त्र एकात्फडन्तः स्याद्विद्या पञ्चाशतावधि ॥

बाला विंशाक्षरान्ता च रुद्रा द्वाविंशदायुधा । तत ऊर्ध्वं तु ये मन्त्रा वृद्धा यावच्छतत्रयम् ॥ १८

अकारादिहकारान्ताः क्रमात्पक्षौ सितासितौ । अनुस्वारविसर्गेण विना चैव स्वरा दश ॥ १९

ह्रस्वाः शुक्ला दीर्घाः श्यामास्तिथयः प्रतिपन्मुखाः । उदिते शान्तिकादीनि भ्रमिते वैश्यकादिकम्
धीमिते संध्येया द्वेषोच्चाटने स्तम्भनेऽस्तकम् । इडावाहे शान्तिकार्थे पिङ्गले कर्षणादिकम् ॥
मारणोच्चाटनादीनि विषुवे पञ्चधा पृथक् । अधरस्य गृहे पृथ्वी ऊर्ध्वे तेजोऽन्तरा द्रवः ॥ २२

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थानेऽयं पाठो दृश्यते क. ड. पुस्तकयोः—हैमी धार्याऽऽशिवमन्त्रेण वाच्य तु शिरसः शिखा । तथा ज्योतिषमाविश्य सावित्रश्चेति गोचरा इति ।

---

१ क. ड. °येदनुक्रमात् । २ क. ड. शिवाकु° । ३ छ. सागरश्चै° । ४ ख ग. °ण्डिनो प° । ५ छ. °दस्य-न्दवि° । ६ छ. याजयेत् । ७ ख ग. °दः स्यांश° । ८ क. ड. °देद्धदि । म° । ९ क. ड. °नाद्यंशस्यात्म° । १० क. ड. विष्ण्वंशो । ११ छ. °को भवेद्वीर । १२ क ड च मनी । १३ क. ड नागाद्यो । १४ क. ड. °गस्तद्धक्षो । १५ क. ड. °क्षादो भू° । १६ क. ड. ध. च रक्षाद्यानिवातु° । ख. ग. च वर्णा द्व° । १७ क. ड. वधका° । १८ ख. ग. भ्रमिते । १९ क. ड. मध्यया ।

रन्ध्रपार्श्वे वह्निर्वायुः सर्वं व्याप्य महेश्वरः । स्तम्भनं पार्थिवे शान्तिर्जले वश्यादि तेजसे ॥
वायौ स्यात्क्रमणं शून्ये पुण्यं कालं समभ्यसेत् ॥ २३

इत्यादिमहापुराण आग्नेयेऽक्षरादिकथनं नाम पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६७६

---

अथ षड्विंशत्यधिकत्रिशततमोऽध्यायः ।

---

गौर्यादिपूजा ।

ईश्वर उवाच—

सौभाग्यादेवपूजां वक्ष्येऽहं भुक्तिमुक्तिदाम् । मन्त्रध्यानं मण्डलं च मुद्रां होमादिसाधनम् ॥१
त्रिपमात्रं शिवं कालं महाशक्तिसमन्वितम् । इडाख्यं परतोद्धृत्य मदंशं सविकारणम् ॥ २
द्वितीयं द्वारकाक्रान्तं गौरीगतिपदान्वितम् । चतुर्थ्यन्तं मरुत्कर्यं गौर्या वै मूलवाचकम् ॥ ३
ॐ ह्रीं सः शौ*गौर्यै नमः । ४
तमाद्यन्तितयेनैव जातियुक्तं षडङ्गकम् । आसनं प्रणवेनैव मूर्तिं वै हृदयेन तु ॥ ५
ऊहकं च तथा कालं शिवबीजं समुद्धरेत् । प्राणं दीर्घस्वराक्रान्तं षडङ्गं जातिसंयुतम् ॥ ६
आसनं प्रणवेनात्र मूर्तिन्यासं हृदाऽऽचरेत् । यामलं कथितं वत्स एकवीरं वदाम्यथ ॥ ७
व्यापकं दृष्टिसंयुक्तं षष्ठिमायाङ्कुशानुभिः । शिवशक्तिमयं बीजं हृदयादिविवर्जितम् ॥ ८
गौरीं यजेद्धेमकल्पां कार्मुकां दैलनादिकाम् । पञ्चपिण्डां तथाऽव्यक्तां कोणे मध्ये तु पञ्चमम् ॥
ललिता सुभगा गौरी क्षोभनी(णी) चाग्नितः क्रमात् । वामा ज्येष्ठा क्रिया ज्ञाना दृष्टे पूर्वादितो
यजेत् ॥ १०
सपीठे वामभागे तु शिवस्याव्यक्तरूपकम् । व्यक्ता द्विनेत्रा त्र्यक्षा वा शुद्धा वा शंकरान्विता ॥
पीठपद्मद्वयस्था वा द्विभुजा वा चतुर्भुजा । सिंहस्था वा वृषस्था वा अष्टाष्टादशसत्करा ॥ १२
स्रगक्षसूत्रकलिकौ गलकोत्पलपिण्डिका । शरं धनुर्वा सव्येन पाणिनाऽन्यतमं महत् ॥ १३
वामेन पुस्तताम्बूलदण्डाभयकमण्डलुम् । गणेशं दर्पणेष्वासान्दद्यादेकैकशः क्रमात् ॥ १४
व्यक्ताव्यक्ताऽथ वा कार्या पद्ममुद्रा स्मृताऽऽसने । लिङ्गमुद्रा शिवस्योक्ता †मुद्रा चाऽऽवाहनी द्वयोः
शक्तिमुद्रा तु योन्याख्या चतुरस्रं तु मण्डलम् । चतुर्हस्तं त्रिरश्राङ्गं पञ्चकोष्ठचतुष्टये ॥ १६
व्यस्रार्धे चार्धचन्द्रं तु द्विपदं द्विगुणं क्रमात् । द्विपदं द्वारकण्ठं तु द्विगुणादुपकण्ठतः ॥ १७
द्वारत्रयं त्र्यं दिक्षु अथ वा भद्रके यजेत् । स्थण्डिले वाऽथ संस्थाप्य पञ्चगव्यामृतादिना ॥ १८
रक्तपुष्पाणि देयानि पूजयित्वा गुरुर्मुखः । शतं हुत्वा घृताद्यं च पूर्णादः सर्वसिद्धिभाक् ॥
बलिं दत्त्वा कुमारीश्च तिस्रो वा चाष्ट भोजयेत् । नैवेद्यं शिवभक्तेषु दद्यान्न स्वयमाचरेत् ॥२०

---

* इदं पदं नास्ति क. ङ. ञ. पुस्तकेषु । † " मुद्राऽऽवाहन वर्गौः " इत्यंशः क्वचित्पाठः ।

---

१ ग. 'रौद्रांति' । २ ख. 'द्भुतम्' । ३ क. ख. ग. ङ. 'दंष्ट्रा' । ४ क. ङ. ञ्जातवपुम् । ५ ख. ग.
ङास्यजा । क. ङ. योद्भवा । ६ ख. ग. 'कस्तारा द्वि' । ७ क. ख. ङ. 'का मताको' । ८ क. ङ. '■ द्विदाऽऽ'
९ ख. 'हृदन् । मन्' । १० ख. ग. त्रियो ।

कन्यार्थी लभते कन्यामपुत्रः पुत्रमाप्नुयात् । दुर्भगा चैव सौभाग्यं राजा राज्यं जयं रणे ॥ २०
अष्टलक्षैश्च वाक्सिद्धिर्देवाद्या वशमाप्नुयुः । अनिवेद्य न चाश्नीयाद्वामहस्तेन चार्चयेत् ॥ २१
अष्टम्यां च चतुर्दश्यां तृतीयायां विशेषतः । मृत्युंजयार्चनं वक्ष्ये पूजयेत्कलशोदरे ॥ २२
हूयमानं च प्रणवो मूर्तिरौंजूंस ईदृशम् । मूलं च वौषडन्तेन कुम्भमुद्रां प्रदर्शयेत् ॥ २३
होमयेत्क्षीरदूर्वाज्यममृतां च पुनर्नवाम् । पायसं च पुरोडाशमयुतं तु जपेन्मनुम् ॥ २४
चतुर्मुखं चतुर्बाहुं द्वाभ्यां च कलशं दधत् । वरदाभयकं द्वाभ्यां स्नायाद्वै कुम्भमुद्रया ॥ २५
आरोग्यैश्वर्यदीर्घायुरौषधं मन्त्रितं शुभम् । अपमृत्युहरो ध्यातः पूजितो ह्येत एव सः ॥ २६

इत्यादिमहापुराणे आग्नेये गौर्यादिपूजावर्णनं नाम षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७०२

---

अथ सप्तविंशत्यधिकत्रिशततमोऽध्यायः ।

---

## देवालयमाहात्म्यम् ।

ईश्वर उवाच—

व्रतेश्वरांश्च सत्यादीनिष्ट्वा व्रतसमर्पणम् । अरिष्टशमने शस्तमरिष्टं सूत्रनायकम् ॥ १
हेमरत्नमयं भुक्त्यै महाशङ्खं च मारणे । आप्यायने शङ्खसूत्रं मौक्तिकं पुत्रवर्धनम् ॥ २
स्फाटिकं भूतिदं कौशं मुक्तिदं रुद्रनेत्रजम् । धात्रीफलप्रमाणेन रुद्राक्षं चोत्तमं ततः ॥ ३
समेरुं मेरुहीनं वा सूत्रं जप्यं तु मानसम् । अनामाङ्गुष्ठमाक्रम्य जपं भाष्यं तु कारयेत् ॥ ४
तर्जन्यङ्गुष्ठमाक्रम्य न मेरुं लङ्घयेज्जपे । प्रमादात्पतिते सूत्रे जप्तव्यं तु शतद्वयम् ॥ ५
सर्ववाद्यमयी घण्टा तस्या वादनमर्थकृत् । गोशकृन्मूत्रवल्मीकमृत्तिकाभस्मवारिभिः ॥ ६
वेश्मायतनलिङ्गादेः कार्यमेवं विशोधनम् । स्कन्दो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥ ७
गीतः पञ्चाक्षरो वेदे लोके गीतः षडक्षरः । ओमित्यन्ते स्थितः शम्भुर्मुद्रार्थे वटबीजवत् ॥ ८
क्रमान्नमः शिवायेति ईशानाद्यानि वै विदुः । षडक्षरस्य सूत्रस्य भाष्यं विद्याकदम्बकम् ॥ ९
यदों नमः शिवायेति एतावत्परमं पदम् । अनेन पूजयेल्लिङ्गं लिङ्गे यस्मात्स्थितः शिवः ॥ १०
अनुग्रहाय लोकानां धर्मकामार्थमुक्तिदः । यो न पूजयते लिङ्गं न स धर्मादिभाजनम् ॥ ११
लिङ्गार्चनाद्भुक्तिमुक्तिर्यावज्जीवमतो यजेत् । वरं प्राणपरित्यागो भुञ्जीतापूज्य नैव तम् ॥ १२
रुद्रस्य पूजनाद्रुद्रो विष्णुः स्याद्विष्णुपूजनात् । सूर्यः स्यात्सूर्यपूजातः शक्त्यादिः शक्तिपूजनात्
सर्वयज्ञतपोदाने तीर्थे वेदेषु यत्फलम् । तत्फलं कोटिगुणितं स्थाप्य लिङ्गं लभेन्नरः ॥ १४
त्रिसंध्यं योऽर्चयेल्लिङ्गं कृत्वा बिल्वेन पार्थिवम् । शतैकादशिकं यावत्कुलमुद्धृत्य नाकभाक् ॥ १५
भक्त्या वित्तानुसारेण कुर्यात्प्रासादसंचयम् । अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥ १६
भागद्वयं च धर्मार्थे कल्पयेज्जीवनाय च । धनस्य भागमेकं तु अनित्यं जीवितं यतः ॥ १७

---

१ क. ख. °न चार्चयेत् । २ ख. ग. °जूमासन । क. ङ. स्नापयेत् । ३ क. ङ. भुक्ति । ४ क. ङ. अपापने ।
५ क. ङ. °मार्गेण न । ६ क. ङ. °दार्थे वटबी° । घ. °दार्थे म° ।

त्रिसप्तकुलमुद्धृत्य देवागारकृदर्थभाक्। मृत्काष्ठेष्टकशैलाद्यैः क्रमात्कोटिगुणं फलम्॥ १८
अष्टेष्टकसुरागारकारी स्वर्गमवाप्नुयात्। पांसुना क्रीडमानोऽपि देवागारकृदर्थभाक्॥ १९

इत्यादिमहापुराणे आग्नेये देवालयमाहात्म्यवर्णनं नाम सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७२१

---

अथाष्टाविंशत्यधिकत्रिशततमोऽध्यायः।

---

छन्दःसारः।

अग्निरुवाच—

छन्दो वक्ष्ये मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम्। सर्वादिमध्यान्तगणौ म्लौ भ्यौ ज्सौ त्रिका गणाः॥ १
ह्रस्वो गुरुर्वा पादान्ते पूर्वो योगाद्विसर्गतः। अनुस्वाराद्व्यञ्जनात्स्याज्जिह्वामूलीयतस्तथा॥ २
उपध्मानीयतो दीर्घो गुरुर्ल्गौ लौ गणाविह। वसवोऽष्टौ च चत्वारो वेदादीन्यादिलोकतः॥ ३

इत्यादिमहापुराणे आग्नेये छन्दःसारकथनं नामाष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७२४

---

अथैकोनत्रिंशदधिकत्रिशततमोऽध्यायः।

---

छन्दःसारः।

अग्निरुवाच—

छन्दोऽधिकारे गायत्री दैवी चैकाक्षरा भवेत्। पञ्चदशाक्षरा सा स्यात्प्राजापत्याऽष्टवर्णिका॥ १
यजुषां षडर्णा गायत्री साम्नां स्याद्द्वादशाक्षरा। ऋचामष्टादशार्णा स्यात्साम्नां वर्धेत च द्वयम्॥ २
ऋचां त्रयं च वर्धेत प्राजापत्याश्चतुष्टयम्। वर्धेदेकैकशः शेषे आसुरीं एकमुत्सृजेत्॥ ३
उष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगत्यपि। तानि ज्ञेयानि क्रमशो गायत्र्यो ब्राह्म्य एव ताः॥ ४
तिस्रस्तिस्रः सनाम्न्यः स्युरेकैका आर्ष्य एव च। साम्नयजुषां च संज्ञाः स्युश्चतुःषष्टिपदे लिखेत्

इत्यादिमहापुराणे आग्नेये छन्दःसारकथनं नामैकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७२९

---

१ क. ङ. छन्दाल्यको। २ ख. ष. "लक्ष्देः वि"। ३ क. ङ. ष्टौ। ख. घ. ष्टौ। ४ क. ङ. ज्सौ। ५ ख. घ. "स्पो सधुर्वा। ६ ख. ग. "ङ स्रौ सप्तथाते"। ७ ख. घ. "दा इत्यादि। ८ ङ. "क्षेदाः। ९ क. ङ. "दशाधुरी स्यात्"। १० ख. ङ. "पेदूर्थ ह"। ११ क. ङ. "श्च ऐव"। १२ ख. आर्वे। १३ ख. च। कावे"।

अथ त्रिंशदधिकत्रिशततमोऽध्यायः ।

## छन्द सार ।

अग्निरुवाच—

पाद आपादपूरणे गायत्र्यो वसवः स्मृताः । जगत्या आदित्याः पादो विराजो दिश ईरिताः
त्रिष्टुभो रुद्राः पादः स्याच्छन्द एकादिपादकम् । आद्य चतुष्पादृतुभिस्त्रिपात्सप्ताक्षरैः क्वचित् २
(*सा गायत्री पादनिचृत्प्रतिष्ठाष्टाद्विपट्त्रिपात् । वर्धमाना षडष्टाष्टा त्रिपाद्धोऽष्टभूधरैः ॥ ३
गायत्र्यपि त्रिपाद्वनिचृन्नागी नवनवर्तुभिः । वाराही रसद्विर्नन्दैश्छन्दश्चाथ तृतीयकम् ॥ ४
द्विपाद्द्वादशवस्वर्णैस्त्रिपात्तु त्रैष्टुभैः स्मृतम् । उष्णिक्छन्दोऽष्टवस्वर्कैः पादैर्वेदे प्रकीर्तितः ॥ ५
ककुबुष्णिगष्टसूर्यवस्वर्णैस्त्रिभिरेव सः । पुर उष्णिक्सूर्यवसुनस्वर्णश्च त्रिपाद्भवेत् ) ॥ ६
परोष्णिक्परतस्तु स्याच्चतुष्पादस्त्रिभिर्भवेत् । साष्टाक्षरैरनुष्टुप्स्याच्चतुष्पाच्च त्रिपात्क्वचित् ॥ ७
अष्टार्कसूर्यवर्णैः स्यान्मध्येऽन्ते च क्वचिद्भवेत् । बृहती जगतस्त्रयो गायत्र्याः पूर्वको यदि ॥ ८
तृतीयः पथ्या भवति द्वितीया न्यङ्कुसारिणी । स्कन्धो ग्रीवा क्रौष्टुके स्याद्यास्कस्योरो बृहत्यपि
उपरिष्टाद्बृहत्यन्ते पुरस्ताद्बृहती पुनः । क्वचिन्नवकाश्चत्वारो दिग्विदिक्चष्टवर्णिका ॥ १०
महाबृहती जागतैः स्यात्त्रिभिः सतो बृहत्यपि । ताण्डिनः पङ्क्तिश्छन्दः स्यात्सूर्यार्काष्टाष्टवर्णकैः॥
पूर्वौ चेद्युजौ सतः पङ्क्तिश्च विपरीतकौ । प्रस्तारपङ्क्तिः पुरतः परोदास्तारपङ्क्तिकः ॥ १२
+विस्तारपङ्क्तिरन्तश्चेद्बहिः संस्तारपङ्क्तिका । अक्षरपाङ्क्तः पञ्चकाश्च चत्वारश्चाल्पशो द्वयम् ॥ १३
पदपङ्क्तिः पञ्च भवेच्चतुष्क षट्कत्रयम् । षट्कपञ्चभिर्गायत्रैः षड्भिश्च जगती भवेत् ॥ १४
एकेन त्रिष्टुब्ज्योतिष्मती तथैव जगतीरिता । पुरस्ताज्ज्योतिः प्रथमे मध्येज्योतिश्च मध्यतः १४
उपरिष्टाज्ज्योतिरन्त्यादेकस्मिन्पञ्चके तथा । भवेच्छन्दः शङ्कुमती षट्के छन्दः ककुद्मती ॥ १६
त्रिपादशिशुमध्या स्यात्सा पिपीलिकमध्यमा । विपरीता यवमध्या त्रिवृदेकेन वर्जिता ॥ १७
भुरिजैकेनाधिकेन विहीना च विराड्भवेत् । स्वराट्स्याद्द्वाभ्यामधिके संदिग्धे दैवतादितः ॥१८
आदिपादान्निश्चयः स्याच्छन्दसां देवताः क्रमात् ।(†अग्निः सूर्यः शशी जीवो वरुणश्चन्द्र एव च
विश्वे देवाश्च पैङ्गलस्याः स्वराः षड्जो वृषः क्रमात्) । गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा
निषादो वर्णाः श्वेतश्च सारङ्गश्च पिशङ्गकः । कृष्णो नीलो लोहितश्च गौरो गायत्रिमुख्यके ॥ २१

* धनुश्चिह्नान्तर्गतग्रन्थो ङ पुस्तके नास्ति । + इदमर्धं नास्ति क घ ङ पुस्तकेषु । † धनुश्चिह्नान्तर्गतग्रन्थो नास्ति क ङ पुस्तकयोः ।

१ ख 'पूरेण मा' । २ ङ त्रिष्टुतो । ३ छ 'त्री पदे निवृत्तप्रतिष्ठादि' । ४ छ 'त्वड्वसुभू' । ५ छ 'यत्री त्रिपदनीवृता' । ६ क 'द्विपदा पथमान वस्तथा ॥ वस्वश्चटरवर्णैश्च प्रतिष्ठा तु प्रकीर्तिता ॥ द्वि' । ७ ङ छ 'पादवर्जुने स्मृ' । ८ ख गनुष्टुप्तुप । ९ ख ग 'स्वणद्विभिन' । छ 'स्वणात्रिभि' । १० क ङ 'ष्याच्चतुर्भिर्भि' । छ 'प्यादाभिनि' । ११ क 'वींजागतस्त्र' । १२ छ गचक्र । १३ छ स्कन्धौ । १४ छ स्यादचे स्याद्ग्री पृ' । १५ क छ 'स्यादधु' । १६ ख ग द्विग्दिगष्टा' । १७ छ मण्डिक । १८ घ ङ च 'वौ चेद्यु' । घ 'वौ देवयु' । १९ ख ङ ष्यादा' । २० घ ङ 'दास्तारप' । २१ क ङ त्रिवृद्देकेन । ख ■ त्रिवृत्कन । २२ ङ भूरिज' । २३ छ. द्वि धाना । २४ छ षड्जाक्ष । २५ क ङ 'पायत्र्युच्यते । ग' ।

गोरोचनाभाः कृतयो द्युतिश्छ(च्छ)न्दो हि श्यामलम् । अग्निर्वेश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात् २३
भार्गवः कौशिकश्चैव वासिष्ठो गोत्रमीरितम् ॥

इत्यादिमहापुराणे आग्नेये छन्दःसारकथनं नाम त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८९२

---

अथैकत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

छन्दोजातिनिरूपणम् ।

अग्निरुवाच—

षट्पञ्चाशत्तमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत् । अभिसंख्या प्रत्यक्कृतिस्तानि च्छन्दांसि वै पृथक् ॥ १
चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत् । अतिशक्करी शक्करीति अतिजगती जगत्यपि ॥ २
कृतिश्चातिधृतिर्धात्री अत्यष्टिश्चाष्टिरित्यतः । अतिशक्करी शक्करीति अतिजगती जगत्यपि ॥ ३
छन्दोऽत्र लौकिकं स्याच्च आर्षमार्षं तु भास्स्मृतम् । त्रिष्टुप्पङ्क्तिर्बृहती अनुष्टुबुष्णिगीरितम् ॥ ४
गायत्री स्यात्सुप्रतिष्ठा प्रतिष्ठा मध्यया सह । अत्युक्तात्युक्त आदिश्च एकैकाक्षरवर्जितम् ॥ ५
चतुर्भागो भवेत्पादो गणच्छन्दः प्रदर्श्यते । तावन्तः समुद्रा गणा ह्यादिमध्यान्तसर्वगाः ॥ ६
चतुर्वर्णाः पञ्च गणा आर्यालक्षणमुच्यते । स्वरार्धं च आर्यार्धं स्यादार्यायां विषमेण जः ॥ ७
षष्ठो जो न लघुर्वा स्याद्द्वितीयादिपदं नले । सप्तमेऽन्ते प्रथमा च द्वितीये पञ्चमे नले ॥ ८
अर्धे पदं प्रथमादि षष्ठ एको लघुर्भवेत् । त्रिषु गणेषु पादः स्यादार्यापञ्चार्धके स्मृता ॥ ९
विपुलान्यथ चपला गुरुमध्यगतौ च जौ । द्वितीयचतुर्थौ पूर्वे च चपला मुखपूर्विका ॥ १०
द्वितीये जघनपूर्वा चपलार्या प्रकीर्तिता । उभयोर्महाचपलौ गीतवाग्यार्धतुल्यकौ ॥ ११
अन्त्येनार्धेनोपगीतिरुद्गीतिश्चोत्क्रमात्स्मृता । अर्धे रक्षगणा आर्या गीतिश्छन्दोऽथ मात्रया ॥ १२
वैतालीयं द्विधस्ता स्याच्चतुष्पादे समे नलः । वसवोऽन्ते वनगाथ गोपुच्छं दग्धकं भवेत् ॥ १३
भगणान्ता पौतलिका शेषे परे च पूर्ववत् । साकं षड्वा मिश्रयानि प्राच्यवृत्तिः प्रदर्श्यते ॥ १४
पञ्चमेन पूर्वसाकं तृतीयेन सहस्रयुक् । उदीच्यवृत्तिराद्या स्यात्पुगपच्च प्रवर्तकम् ॥ १५
अयुक्स्यादहासिनी स्याद्युगपच्चान्तिका भवेत् । सप्तार्चिर्वसवश्चैव मात्रासमकमीरितम् ॥ १६
भवेच्चलरमौ लश्च द्वादशो वा नवासिका । विश्लोकः पञ्चमाष्टौ मो चित्रा नवमकश्च लः ॥ १७
परयुक्ते नोपचित्रा पादाकुलकमित्यतः । गीत्यार्यालोपश्चेत्सौम्या लपूर्वा ज्योतिरीरिता ॥

---

१ छ. ज्योतिश्छन्दो । २ क. ड. 'त्रिबृहती अ' । छ. त्रिवृत्ती अ' । ३ क. ड. अष्टिरत्यष्टि' । ४ क. ट. छ. अतिश-करी । ५ क. ड. छ. शर्करी । ६ क. ड. आर्यामार्षेयतान्स्मृत' । ख. ग. आर्यामार्षेयमस्मृत' । ७ क. ड. 'कैकोत्तर' । ८ ख. ग. 'संधित' । ९ क. ड. गणछन्द । १० क. ड. प्रदाश्यते । ११ ख. ग. 'ते । अपेन्त' । १२ ख. ग. 'म नरः । प' । १३ ख. ग. 'माख्ये । १४ क. ड. 'श्च शीतवार्धे । १५ ख. ग. 'श्च । आदेना' । १६ क. ड. अनन्तेनो' । १७ क. ड. 'र्धे च खगणमार्या' । ख. ग. 'र्धे नमुगण आ' । १८ ख. ग. 'र्धे पङ्क्तिः मुराख्या' । १९ छ. द्विस्ता स्यादयुग्मा' । २० क. ड. 'यो तेन नाम्ना' । २१ छ. पाप्तलिका । २२ ख. ग. अनुच्चारहा' । २३ क. ड. 'युध्माद' । २४ क. ड. 'दु । गवाद्वि' । ख. ग. 'दु । गवाद्वि' । २५ क. ड. 'वेत् नरमो नव द्वात्यांसनन' । २६ क. ड. विश्लोकः पञ्चमाष्टौमो चित्रनवमकश्च नः । प' २७ क. ख. ड. 'पचिता । २८ २ क. ड. 'लोपश्चेत्सौम्या नः पूर्वा ज्यो' ।

स्याच्छिखा विपर्यस्तार्धा तूलिका समुदाहृता । एकोनत्रिंशदन्ते गः स्याच्चैन न समावलौ १७
गु इत्येकगुरुं संख्या वर्णादेश्च विपर्ययात् ॥ १८

इत्यादिमहापुराण आग्नेये छन्दोजातिनिरूपणं नामैकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७७०

---

अथ द्वात्रिंशदधिकत्रिशततमोऽध्यायः ।

---

विषमकथनम् ।

अग्निरुवाच—

वृत्तं समं चार्धसमं विषमं च त्रिधा वदे । समं तावत्कृत्स्नकृतमर्धं सम्यं च कारयेत् ॥ १
विषमं चैव वा स्यूनमतिवृत्तं समान्यपि । लघ्नौ चतुष्प्रमाणी स्यादाभ्यामन्यद्वितानकम् ॥ २
*पादस्याऽऽद्यं तु वक्त्रं स्यात्सनौ न प्रथमा स्मृतौ । वान्यपुश्चतुर्थाद्वर्णात्पथ्यावक्त्रं स्वयोजतः
विपरीतपथ्या न्यासाच्चपला वायुजस्नतः । +विपुलौ युग्मसप्तमः सर्वे तस्यै तस्य थं ॥ ४
भौतो वा विपुलानेका वक्त्रजातिः समीरिता । भवेत्पदं चतुरूर्ध्वं चतुर्वृद्ध्या पदेषु च ॥ ५
गुरुद्वयान्तु आपीडः प्रत्यापीडो गणादिकः । प्रथमस्य विपर्यासे मञ्जरी लवणी क्रमात् ॥ ६
भवेदमृतधाराख्या उद्गतेस्तुच्यतेऽधुना । एकतः ससजसा नः स्युर्नसौ जो गोऽथ भौ न जौ॥
नो गोऽथ सजसा गो मस्ततीयचरणस्य च । सौरभे केचन भगा ललितं च नमौ जसौ ॥ ८
उपस्थितं प्रचुपितं प्रथमाद्यौ समौ भैसौ । गोगयो मस्नना रो गः समौ च रजयाः पदे ॥ ९
वर्धमानं भेलौ स्तोन सौ अथो तोजोर ईरिता । शुद्धविराडार्षभाख्यं वक्ष्ये चार्धसमं ततः ॥

इत्यादिमहापुराण आग्नेये विषमकथनं नाम द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७८०

---

* भस्मिञ्छ्लोकेऽयं पाठः क. ख. पुस्तकयोः—पादस्य वक्त्रं स्यात्सनौ तत्प्रथमा स्मृतौ । वान्यथाप्यपा-चपथ्यापवक्त्र युजोज न इति । + एतदर्धस्थाने क. ङ. पुस्तकयोः 'विपुलायुग्मसकूर्माः सर्वतः प्रितवस्य च' इति ।

---

१ क. ङ. विस्तरार्धा । २ क. ङ. गुलिका । ख. ग. मूलिका । ३ क. ङ. एकेन विंशदन्ते घः स्याजनन-समावलाः । गु । ४ घ. 'ज्जेजन । ५ क. ङ. 'ला । लई इत्येरं गुरुयं । ६ ख. ग. ङ. । ७ 'णद्गाविं' । ८ छ. 'देशाविं' । ९ घ. ग. 'वद् इदहृतमर्पनं' । घ. 'वद् इदृकृतमर्पंस' । १० क. ङ. 'सदृइदसमर्पंत' । ११ ख. ग. 'वि । मनौ च' । घ. 'वि । नमौ च' । १२ ख. ग. 'लाम्रधम' । १३ ख. ग. च दौ नौ वा । १४ ख. ग. 'दशेऽस्य तु आ' । १५ क. ङ. 'पीडोमकादि' । १६ ख. ग. 'प्रादिकः । १७ क. ङ. च नवलो । ख. ग. लवनी । १८ ख. ग. उद्गतेरसु' । १९ क. ङ. 'तः ग्रजसा नस्युर्नभौ गो जोऽथभौजमौ । नागो । ख. ग. 'तः सजसा नस्युर्नसौ ज्यौ गोऽ' । २० ख. ग. नो । २१ क. ङ. सौरभे । २२ ख. ग. 'नं रजभाण्यद्वर्तकवौ च नध्वे च यौ । २३ क. ङ. केचन भयाललितं तत्वसौदयौ । ङ' । २४ ख. ग. जभौ । २५ क. ङ. 'प्रमोदतौ च नभौ अथाम्येयो नतौरितम् । गु' । २६ ख. ग. तनौ । २७ घ. 'सौ रौ न भसौ नौ जोय ई' ।

अथ त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## अर्धसमनिरूपणम् ।

अग्निरुवाच— १
सर्पंत्रिकं सेसमनामथभोज भगागथ । द्रुतमध्यौ ततभगा गयोननजयाः स्मृताः ॥ २
वेगवती सेससमगा भभभ गोगथो स्मृता । रुद्रविस्तारस्तौ सभगासमजा गोगथा स्मृतौ ॥ ३
रजसा गोगथौ द्रोणौ गोगौ चै केतुपत्यपि । आख्यानिकी ततजगा गथौ जगतनगागथ ॥ ४
विपरीताख्यानकीतिर्जपगा तौ जगोगथ । सीमल्लौगथ लभभारो भवेद्धरिणवल्लभा ॥ ५
लौ वनौ गाथ नजजा यः स्यादपराक्रमम्(?) । पुष्पिताग्रा नलवया नजजौ रो गथो रजौ ॥
योजयो जवजवागो मूले पनमती शिखा । अष्टाविंशतिनागाभा त्रिंशद्भागं ततो युजि ॥ ६
खञ्जा तद्विपरीता स्यात्समवृत्तं मैदर्श्यते ॥

इत्याग्नेये महापुराणे आग्नेयेऽर्धसमनिरूपणं नाम त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७८६

---

अथ चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## समवृत्तनिरूपणम् ।

अग्निरुवाच—
यतिर्विच्छेद इत्युक्तस्तत्सन्मध्यान्तयौ गणौ । यौ सः कुमारललिता वौ गौ चित्रपदा स्मृता॥ १
तथा विपुलाकं सभागस्य गणौ रतलगैर्भवेत् । माणवकाक्रीडितकं वैनौ हलमुखी यसः ॥ २
विद्युन्माला सभागस्य गणौ रतलगैर्भवेत् । भवेच्छुद्धविराड्वृत्तं प्रतिपादं समौ जगौ ॥ ३
स्याद्भुजगशिशुसृता नौ मोह सवतं नैनौ । भवेच्छुद्धविराड्वृत्तं प्रतिपादं समौ जगौ ॥ ४
मणधो ननयामः स्याज्जौ गौ मयूरसारिणी । सैत्ताभभसगा वृत्तं भजताप्युपरि स्थिता ॥ ५
रुक्मवती भससगाविन्द्रवज्रा तैजौ जैगौ । जतौ जगौ तूपपूर्वा वाद्यन्ताप्युपजातयः ॥
दोधकं भग(भ)भागौ स्याच्छालिनी मतभैगगौ । यतिः समुद्रा ऋषयो वातोर्मी मभैतागगौ॥ ६
चतुःस्वरा स्याद्भ्रमरी विलसिता मभौ नलौ । समुद्रा अथ ऋषयो यनौ लौ गौ रथोद्धता ॥ ७

---

१ ख. ग. 'पंचित्र समसनागमभोजभयागयो । छ. 'पंचित्र' । २ क. ङ. सनससनामासभननोभद्रप । ३ घ. ग. 'स्या भभभ' । ४ ख ग. सनससभाभभोमगये । ५ क. ङ. 'ता । सजसाद्योयपोभो वोगोगवेके' । ६ ख. ग. 'यो नौ गो' । ७ ख. ग. योध जजभागथ । छ. 'यो तत' । ८ छ. 'ख्यानिके तौ जग' । ९ ख. ग. 'विजनगोतो । १० छ. 'भावौ भ' । ११ ख. ग. 'ण्प्लुता । मोक्तोयथ' । १२ क. ङ. ननरजारोजागयोयसौ । रजयोरजगः जोरो-
मूलेजवयतौ । छ, ननव' । १३ छ. 'जावोग' । १४ ख. ग. 'जौ । रेजयो अरजारो गोमूलवेबल' । १५ ख. ग. 'तिरा-
गन्ताग्रे' । १६ ख. ग. प्रदर्श्यते । १७ क. ङ. 'समसगया द्वैतंत' । छ. 'नलना मधिभूतगभौ' । १८ ख. रनौ । १९ ख.
घ. रसः । २० घ. 'भुभृता रौ मोह यव' । छ. 'भुसुतानौवेद नवव' । २१ च. ततौ । २२ ख. 'वेच्छन्दद्विराडृत ।
२३ ख. ग. 'द्विराड्वृत । २४ छ. 'मौ । ययवो यतव्यो मः । २५ क. ङ. 'कामनजाग स्यादतो योम' । २६ ख. ग.
'णौ । सतानभय' । २७ क. ङ. सताभव समानू' । २८ क. ङ. ननौ । २९ क. ख. ग्रथे । ३० छ भूसृतां ।
३१ क. ङ. 'नौ यतनाय' । ३२ छ. 'भाभगौ । ३३ क. 'भभाव' ।

स्वागता रनभा गो गो वृत्तानन्तसमाश्च सः । श्येनीर्थे जवना गः स्याद्रम्या नपरगा गगः ॥ ८
जगती वंशस्था वृत्तं जतौ जावथ तौ जरौ । इन्द्रवंशा तोटकं सश्चतुर्भिः प्रतिपादितम् ॥ ९
भवेद्द्रुतविलम्बिता नभौ भरावथो नलौ । स्यौ श्रीपुटो वसुवेदाश्जलोद्धतगतिर्जसौ जसौ ॥ १०
जसौ वसवैश्वाथ ततं ननमैराः स्मृतम् । कुसुमविचित्रा ग्लौ न नौ रम्याचन्द्रिका ॥ ११
भुजंगप्रयातं यैः स्याच्चतुर्भिः स्रग्विणी तु रैः । प्रमिताक्षरा सजौ सौ कान्तोत्पीडेदं भमौ समौ ॥
वैश्वदेवी ममयया पञ्चाश्वा नयमालिनी । नजौ भयौ प्रतिपादं गणा यदि जगत्यपि ॥ १३
महर्षिणी मनजरा गोपतिर्वह्निदिक्षु च । रुचिरा जभसजगा छिन्ना वेदैर्ग्रहैः स्मृता ॥ १४
मत्तमयूरं मतया सगौ वेदग्रहैर्यतिः । गौरी नलैनसा गः स्यादसंबाधा मतौ नसौ ॥ १५
गो ग इन्द्रियनवकौ ननौ रसलगाः स्वराः । स्वराश्चापराजिता स्यान्ननभा नलगाः स्वराः १६
द्विः प्रहरणकलिता वसन्ततिलका नभौ । जौ गौ सिंहोन्नता सा स्यान्मुनेरुद्धर्षिणी च सा ॥ १७
चन्द्रावर्ता ननौ सोमावर्तस्तुनवकः स्मृतः । मणिगुणनिकराऽसौ मालिनी नौ मयौ यसः ॥ १८
यतिर्वसुस्वरा भौ वौ नवलेमिजसग्रहाः । ऋषभगजविलसितं ज्ञेया शिखरिणी यमौ ॥ १९
रसभालश्च गुरुद्राः पृथ्वीजसजसा जयौ । भावसुग्रहविच्छिन्ना पिङ्गलेनेरिता पुरा ॥ २०
वशपत्रपतितं स्याद्भवना भौ नगौ सदिक् । हरिणी नसमा रः सो लगौ रसचतुःस्वराः ॥ २१
मन्दाक्रान्ता समभतं नगौ राब्धिवसुः स्वराः । कुसुमितलता वेल्लिता मतना ययया शराः २२
रैधाः स्वराः प्रतिरथससजाः सततास्य गः । शार्दूलविक्रीडितं स्यादादित्यमुनयो यतिः ॥ २३
कृतिः सुवदना मो रो भनया भनगाः सुराः । यतिर्मुनिरसाश्चाथ इति वृत्तं क्रमात्स्मृतम् ॥ २४
स्रग्धरा मरभा नो यो यपौ त्रिःसप्तका यतिः । सैंपुटकं भरैस्ता नो वनगा दश भास्कराः ॥ २५
अश्वललितं नजभा जभजा भनभीयतः । मत्तक्रीडा ममनैना नौ नभौ गोग्रमातिथिः ॥ २६
तन्वी भनतसा भो भो लयो बाणसुरार्ककाः । क्रौञ्चपदा भमसवा नौ नौ बाणशराष्टताः ॥ २७
भुजंगविजृम्भितं ममतना ननवासनौ । गष्टसमुनिभिश्छेदो ह्यपहावाख्यमीदृशम् ॥ २८
मनना ननता नः सो गणैर्ग्रहरसो रसात् । नौ सप्त रो दण्डदः स्याच्चण्डवृष्टिप्रपातकम् ॥ २९
रैफैर्वृद्ध्या ननवाः स्युर्व्यालजीमूतमुख्यकाः । शेषे वै प्रमितो ज्ञेयो गाथा प्रस्तार उच्यते ॥ ३०

इत्यादिमहापुराणे आग्नेये समवृत्तनिरूपणं नाम चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८१६

---

१ छ रामवा । २ क ङ °ता रणभा । ३ ख घ °नीरजरदाय स्याद्रस्वानपरगागन । ज° । ४ ख ग जरौ । ५ छ. श्रीपुटो वसुवेदा जलोद्धतिजसौ जसौ । ज° । ६ ख ग °सौ रसतंव° । ७ क ङ °मयास्मृ° । ८ छ °श्रा भ्यौ यौ रौ नौ रौ स्याच्चलाम्बिका । ९ क ङ कान्तोत्पीनाममौस । १० ख ग °त्पीला म° । ११ ख ग मरजरा गौ° । १२ क ङ °रा गम° । १३ ख ग जभजसगा । १४ क सगौ । १५ ख ग नननसा म स्या° । १६ ख नरौ । १७ ख ग °तैमव° । १८ छ यग । १९ ख ग °समाद्रिस° । २० ख ग °भजयजत्रि° । २१ ख ग यरौ । २२ क ङ °यौ । नराभानगृह तु द° । २३ क ङ °श्वी सजयसागरौ । गा° । २४ ख ग °नौ । गाव° । २५ क ङ °पसप° । २६ क ङ स्यादचनाद्वौ ग° । २७ ख ग °द्वरयो भौ क्रोस° । २८ ख ग लभौ । २९ ख ग °न्ता नभनन न° । छ °न्ता मभमत । ३० ख. ग. मतोयमयया परा । ३१ क ङ रसासुराष्ट्रतिरथभशता ब्रजजास्तथ । ३२ ख ग °श्चाथाविभिर्वृत° । ३३ क ङ. °रभारोथो यथौ त्रि । ३४ क ग सद्नपञ्चनीरोनाराणा । ३५ ख ग °रनागीतीनोन° । ३६ ख ग °भजलभमा° । ३७ ख. ग. °नमा नौ नभौ घोष्ट° । ३८ ख ग नां यामग° । ३९ क ङ. °र सोसमतना नरसा लगौ । ग° । ४० क. ङ. °नौ । ज्यमगमु° । ख. ग नौ । अष्टेन्द्र मुनिभिरश्छे° । ४१ ख. ग °प्रपात° । ४२ क ङ. °पवत्याभ्ररवर्णा वास्तु° ।

